

# भक्तिविवेकसारः ।

प्रकाशकः—केशवभट्टज्योतिर्वित्

श्रीनगर ( काश्मीर ) स्थः ।

ॐ

धार्मिकसज्जनोपयोग्यः

पण्डित-केशवभट्टज्योतिर्विदा

संस्कृतः शोधितश्च

# भक्तिविवेकसारः ।

सोऽयम्

मुम्बय्यां

श्रीवेङ्कटेश्वराख्यमुद्रणयन्त्रालयेऽङ्कयित्वा सप्तर्षि-
संवत्सरे ५००३ वैक्रमे वत्सरे १९८४ ईस्वी
वत्सरे १९२७.

परोपकाराय प्राकाश्यं नीतः ।

मूल्यं ।।=) दशाणकम् ।

सर्वेऽधिकाराः प्रकाशकाधीनाः सन्ति ।

यह पुस्तक खेमराज श्रीकृष्णदासने बम्बई खेतवाडी ७ वीं गली खम्बाटा लेन निज “ श्रीवेङ्कटेश्वर ” स्टीम् प्रेसमें छापी और पं० ज्योतिर्वित् केशवभट्टने रैनावाडी मोतीयार श्रीनगर काश्मीरमें प्रकाशित की.

# हमारे क्रेय पुस्तक मिलनेका पत्ता—

पं० केशवभट्ट ज्योतिषी पाठशाला टीचर, जिला रैणावारी,
महल्ला भाग ज्योगीलङ्गार कश्मीर--श्रीनगर.



| क्रेयपुस्तकसूची:— | मूल्य |
|---|---|
| (१) नित्यकर्मविधिः (शिक्षा-स्नानविधि-सन्ध्योपासना-नैवेद्यमन्त्र-भोजनविधि—पञ्चायतनपूजा—पञ्चगव्यविधि-गुरु—गायत्री-सरस्वती—गौरी—मुकुन्दमालादिस्तोत्रात्मकः) ... .... | ।) |
| (२) नित्यकर्माविधिः (स्नान—सन्ध्या—नैवेद्य -भोजन—पञ्चगव्यादिविध्यात्मकः) ... .... .... .... .... | ≡) |
| (३) कर्मकाण्डपुस्तकं (सांवत्सरिकपितृकर्मोपयोगि) .... | ।।।=) |
| (४) वेदकल्पद्रुमः (हवनाक्रियोपयोगी) ... .... | १।) |
| (५) मेखलापुस्तकम् (ऋचक-विवाह—मेखला—अग्निकुण्डपूजा—नान्दीश्राद्ध-इहकेलि—कन्यासंस्कारात्मकम्) .... .... | १।।) |
| (६) शिवपूजा (बहुरूपगर्भ--महिम्नःपार—शिवकवच—निर्वाण—चामर—क्षमापनादिस्तोत्र—दीनाक्रन्द—शिवपूजा—गणेशस्तवराजात्मिका) .... .... .... .... .... | ।=) |
| (७) गणेशदुर्गास्तोत्रावली (गणेशस्तोत्रत्रय-गणपतिविद्यारत्नमाला—शारिका—बालीविद्यात्मिका) .... .... ... | ।-) |

क्रेयपुस्तकसूची:— मूल्य

(८) पञ्चस्तवी–सौन्दर्यलहरीयुतात्मिका .... .... .... |–)

(९) वटुकपूजा ( उपयोगिस्तोत्रावलिसमेता कलशपूजा–वैश्वदेवादिसमेता अतीवोपयोगिनी ) ... ... .... .... |||)

१०) पार्थिवेश्वरपूजा ( कलशपूजावैश्वदेवाद्योपयोगिस्तोत्रालङ्कृता ) |||)

(११) उपदेशपञ्चकम् ( शङ्कराचार्यकृत रत्नप्रभाटीकया काश्मीरिकनिधानकाकसाधुनोक्तया समेतम् ) .... .... .... ≡)

(१२) भक्तविवेकसारः ( अज्ञानबोधिनी–योगवासिष्ठसार–आत्मबोध–प्रह्लाद–मुचुकुन्द––रासक्रीडागोपीस्तोत्रादिपञ्चाध्यायी–शिव–विष्णु–गणेश–गुरु–गायत्री–मुकुन्दमाला–नारायणोपनिषत्–त्रिपुरसुन्दरी–शारिकाज्वाला–राज्ञी––कतिपय––विष्णुस्तोत्र–शान्तिक–प्रातःकृत्य––नवग्रहस्तोत्रावली–प्रवेशिका–भिक्षुगीताद्यात्मकः ) .... .... .... .... ... ||=)

(१३) वटुकपूजा ( वैश्वदेवकलशपूजादियुता ) स्तोत्रावलीं विना ||)

(१४) देवीस्तोत्रावली ... .... ... ... ... |||)

(१५) क्षमानुवाक्यम्... ... .... .... ... .... =)

(१६) रुद्रपञ्चकम् .... ... .... .... .... ... |)

॥ श्रीः ॥

अथ

# अज्ञानबोधिनी ।



ॐ श्रीगणेशाय नमः । द्वैताद्वैतमहामोहविघ्नसंघातमर्दिनीम् । गणनाथमयीं वन्दे प्रतिमां पारमेश्वरीम् ॥ १ ॥ यदज्ञानादिदं भाति यज्ज्ञानाद्विनिवर्तते। नमस्तस्मै चिदानन्दवपुषे परमात्मने ॥ २ ॥ अनात्मभूते देहादावात्मबुद्धिस्तु या भवेत् । साऽविद्या तत्कृतो बन्धस्तन्नाशो मोक्ष उच्यते ॥ ३ ॥

" ॐ अथात्मविद्योपदेशविधिं व्याख्यास्यामः ॥ "

तपोभिः क्षीणपापानां शान्तानां वीतरागिणाम्। मुमुक्षूणामपेक्ष्येयं क्रियतेऽज्ञानबोधिनी ॥ ४ ॥

इह खलु अनादिः सान्तो नैसर्गिकोऽध्यासो मिथ्याप्रत्ययरूपः सर्वलोकप्रत्यक्षः । अस्यानर्थहेतोः प्रहाणायात्मैकत्वज्ञानं शिष्यः श्रीगुरुं परिपृच्छति ।

भो भगवन् ! स आत्मा कीदृशः ? तच्छृणु । सच्चिदानन्दाऽद्वितीयमखण्डमचलमजमक्रियं कूटस्थमनन्तं स्वप्रकाशस्वरूपं यद्ब्रह्म स आत्मा ।

भो भगवन् ! तर्हि दीर्घेऽस्मिन्संसारे संसृतिः कस्य ? तस्यैव । स्वाभाविकी वा नैमित्तिकी । यदि स्वाभाविकी तर्हि अवर्जनीयत्वान्मम मोक्षाशा नास्ति । नहि वत्स, नैमित्तिकी । तर्हि किं निमित्तम् ? तत् सावधानमतिः शृणु । स्वाश्रया स्वविषया स्वाऽनुभवगम्या स्वाभासा याऽत्रस्त्वनिर्वाच्या सत्त्वेनापि वक्तुं न शक्यते, असत्त्वेनापि वक्तुं न शक्यते, सदसत्त्वेनापि, सद-

सद्विलक्षणत्वेनापि वक्तुं न शक्यते, अत एवानिर्वाच्याऽविद्यास्ति । सा तदाश्रयत्वविषयत्वबलेन सच्चिदानन्दाद्वितीयस्वभावमावृणोति । यथा गर्भागारान्धकारेणागारगर्भमाच्छाद्यते, तथा चित्स्वरूपं कूटस्थमात्मानं स्वस्वरूपमाच्छाद्यैवं विक्षिपति ।

अनात्मनि देहादावात्मत्वेनाभिमन्यमानोऽप्राप्ताऽशेषपुरुषार्थः प्राप्ताशेषानर्थः, अविद्यापरिकल्पितैरेव साधनैरिष्टप्राप्तिमनिष्टनिवृत्तिं च ह्याकांक्षन्, लौकिकवैदिकस्वाभाविकानुष्ठितैरपि विषयसुखार्थं मोक्षाकांक्षामलभमानोऽकाण्डवत् मकरादिभिरिव रागद्वेषादिभिरितस्ततः आकृष्यमाणः सुरनरतिर्यगादिभेदभिन्नासु नानायोनिषु परिवर्तमानो, मोहेन मुह्यमानः संसरति ॥ तथा च श्रुतिः । "न तं विदाथ य इमा जजानान्यद्युष्माकमन्तरं बभूव ।
नीहारेण प्रावृता जल्प्या चासुतृप उक्थशासश्चरन्ति ॥"

स्मृतिरपि । "पुरुषः प्रकृतिस्थो हि भुंक्ते प्रकृतिजान्गुणान् । कारणं गुणसङ्गोऽस्य सदसद्योनिजन्मसु ॥"

स्वामिन् ! युष्मद्वचनमसमञ्जसमिदं भाति । कथम् ? इत्थम्, कूटस्थचिद्घनैकरसस्याऽऽत्मनः शशविषाणतुल्याऽविद्याऽऽवरणविक्षेपरूपा कथं सम्भाव्यते। गगनारविन्दमसत्, तस्य सुरभित्वं कुतः । अतोऽसम्भावनीया माया । साधुसाधु, अरे ! आत्माऽविवेकभ्रममात्रसिद्धा । भो भगवन् ! यद्भ्रममात्रसिद्धम्, तत्किं सत्यम् ? अरे ! यथा इन्द्रजालं पश्यति जनः, तत्र व्याघ्रजलोरगादिसत्यतया न प्रतिभाति किम् ? इन्द्रजालभ्रमे निवृत्ते सर्वं मिथ्येति जानाति । इदं तु सर्वेषामनुभवसिद्धम् । यथा च रज्ज्वामहिभ्रमे निवृत्ते तदनु रज्जुरेव नान्यत्किञ्चित्सर्पादि । तथात्माऽविवेकभ्रमे निवृत्त तदनु सर्वमिदं मिथ्येति ज्ञायते ।

भो भगवन् ! तर्हि भ्रमस्यास्य निवृत्तिः कथम्? इत्थम्, तच्छृणु । अकस्मात्स कथञ्चित्पुण्यवशाद्वा वेदोदितेन ईश्वरार्थं कर्मानुष्ठानेनापगतरागादिमलः, अनित्यतादिदोषदर्शनेनाधिगतसाधनचतुष्टयो वेदान्तेषु प्रतीयमानं सदाचार्येभ्यो ब्रह्मात्मभावं बुभुत्सुरात्मानं ज्ञातुमिच्छति, 'ज्ञानादेव तु कैवल्यम्'इति श्रुतेः । किं साधनचतुष्टयम् ? विवेकवैराग्यशमादिषट्कसम्पत्तिमुमुक्षुत्वम् । विवेकः कः? ब्रह्मैव नित्यं वस्तु,ततोऽन्यत्सर्वं मिथ्येति विवेचनम्॥ १॥वैराग्यं किम् । ऐहिकस्रक्चन्दनादिविषयभोगेष्विव कर्मजन्यतयामुष्मिकामरस्त्रीविमानादिभोगेषु चानित्यतया नितरां विरतिः ॥ २ ॥ शमादीनि कानि ? शमो दम उपरतिस्तितिक्षा समाधानं श्रद्धा चेति । शमः कः ? अन्तरिन्द्रियनिग्रहः। दमः कः ? बाह्येन्द्रियनिग्रहः । उपरतिः का ? विक्षेपाभावः । तितिक्षा का ? शीतोष्णादिद्वन्द्वसहिष्णुता । समाधानं किम्? चित्तैकाग्र्यम्। श्रद्धा का ? गुरुवेदान्तवाक्येषु विश्वासः ॥ ३ ॥ मुमुक्षुत्वं किम् ? मोक्षो मे कदा भूयादितीच्छेति । भो स्वामिन् ! ज्ञानं कथं भवेत् ? रे शिष्य ! श्रवणमनननिदिध्यासनोपायेनैव सम्भवति । तथा च श्रुतिः । 'आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यश्च' इति । स्मृतिश्च 'श्रोतव्यः श्रुतिवाक्येभ्यो मन्तव्यश्चोपपत्तिभिः। ज्ञात्वा च सततं ध्येय एते दर्शनहेतवः । त्वंपदार्थविवेकाय संन्यासः सर्वकर्मणाम् । श्रुत्या विधीयते यस्मादन्यथा पतितो भवेत्'इति । श्रवणं किम्, षड्विधलिङ्गैरशेषवेदान्तानां तात्पर्यावधारणम् । लिङ्गानि कानि, उपक्रमोपसंहारौ अभ्यासोऽपूर्वताफलार्थवादोपपत्त्याख्यानि । उपक्रमोपसंहारौ कौ ? प्रकरणप्रतिपाद्यस्यार्थस्य तदाद्यन्तयोरुपपादनम् ॥ १ ॥ यथा छान्दोग्ये । साध्यस्याद्वयवस्तुनः । एकमेवाद्वितीयमित्यादौ ऐतदात्म्यमिदं सर्वमित्यन्तेषु प्रतिपादनम् । अभ्यासः कः ? तन्मध्ये पौनःपुन्येन

प्रतिपादनम्। २। यथा तत्रैव। तत्त्वमसीति नवकृत्वः प्रतिपादनम् ॥ अपूर्वता का? प्रकरणप्रतिपाद्यस्य वस्तुनः प्रमाणान्तराविषयीकरणम्। ३। यथा तत्रैवाद्वितीयवस्तुनो मानान्तराविषयीकरणम्। फलं किम्? प्रकरणप्रतिपाद्यस्य तत्र तत्र श्रूयमाणं प्रयोजनम्। ४। यथा तत्रैव। "आचार्यवान्पुरुषो वेद। तस्य तावदेव चिरं यावन्न विमोक्षेऽथसम्पत्स्यते" इति स्वरूपप्राप्तिः प्रयोजनं श्रूयते ॥ अर्थवादः कः? प्रकरणप्रतिपाद्यस्य तत्र तत्र प्रशंसनम्। ५। यथा तत्रैव। उत तमादेशमप्राक्ष्यो येनाश्रुतं श्रुतं भवति, अमतं मतम्, अविज्ञातं विज्ञातम्। इत्यद्वयवस्तुप्रशंसनम् ॥ उपपत्तिः का, प्रकरणप्रतिपाद्यार्थसाधने श्रूयमाणा युक्तिः। ६। यथा तत्रैव सौम्यैकेन मृत्पिण्डेन सर्वं मृन्मयं विज्ञातं स्यात्, वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम्, इत्यादावद्वितीयसाधने वाचारम्भणमात्रत्वे युक्तिः श्रूयते। मननं किम्, श्रुतस्याद्वितीयवस्तुनो वेदान्तार्थानुगुणयुक्तिभिरनवरतमनुचिन्तनम् ॥ निदिध्यासनं किम्? विजातीयदेहादिप्रत्ययरहिताद्वितीयवस्तुसजातीयप्रत्ययप्रवाहः। वृक्षस्य स्वगतो भेदः पत्रपुष्पफलादितः। वृक्षान्तरात्सजातीयो विजातीयो नरादिभिरिति। कथमाचार्यः, अज्ञो विज्ञो वा स्यात्। यदि अज्ञः, न ब्रह्मात्मैक्यज्ञानमुपदेष्टुं शक्नुयात्। अथ विज्ञः, तदा ब्रह्मात्मैक्यज्ञानेन ब्रह्मैव भवति, ततो ज्ञानतत्कार्यदेहद्वयनिवृत्तेर्देहादिसम्बन्धाभावात्, न शिष्यादिशासनं ह्युपपद्यते, तस्मादाचार्याऽधीनं ज्ञानमिति रिक्तं वचः ॥ अत्र नायं दोषः। ज्ञानिनो ब्रह्मैक्यज्ञाने जाते, तेन बाधितस्यापि प्रारब्धफलस्य कर्मणोऽबाधितत्वमेव भवति। अतएव ज्ञानिनस्तत्प्रारब्धवेगवशाद्देहादि प्रतिभासते, अतोऽवगतब्रह्मात्मज्ञानं सम्प्रदायक्रमेणोपदिशति। तस्मादाचार्याधीनं ज्ञानम्, ज्ञानान्मोक्ष इति सिद्धम्। तस्मात् वेदोक्तसाधनसम्पन्नं ब्रह्मविदमाचार्यमुपेत्य साष्टाङ्गं प्रणिपातं कृत्वा समित्पाणिः पुरत

उपविश्य विज्ञापयति । तथा च श्रुतिः । समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठं गुरुं तत्त्वविज्ञानार्थमभिगच्छेत् ॥

भो भगवन् ! संसारतापत्रयार्कसन्तप्तोऽहमस्य तापस्य निवृत्तिं कुरु ममेति तापत्रयं किम्, आध्यात्मिकमाधिदैविकमाधिभौतिकं चेति । तत्राध्यात्मिकम्, आधिरूपमिष्टवियोगानिष्टप्राप्तिजम् । आधिदैविकमकालवृष्टिदुर्भिक्षादिजम् । आधिभौतिकं शारीरिकव्याधि दुर्जनबाधादिजमिति । भोः स्वामिन् सद्गुरो ! उपदिशेति विज्ञापितः सन्, सद्गुरुरुपदिशति । कथम्, इत्थम्, अरे तव ब्रह्मा-त्मैक्यज्ञानेजाते संसारनिवृत्तिर्भविष्यत्येव, नाऽन्यथा । भो भगवन् ! तत्केन-भविष्यति ? तच्छृणु । आदौ त्वंपदार्थशोधनेन जीवत्वं निरस्य यदा शुद्धो भविष्यसि, तदा ब्रह्मात्मैकत्वभावो भविष्यति । यथा ग्रामादिस्थितं चन्दन-वृक्षं प्रति, अज्ञस्यासम्भावना भवत्येव, नेदं चन्दनमिति, अन्यो युक्त्या प्रतिबोधयति 'कटु सुगन्धि शीतलं चन्दनम्' इति । तथा श्रुत्या-वधारितस्य 'तत्त्वमसि इति महावाक्यस्य तात्पर्यम्' गुरुर्युक्त्या प्रतिबोधयति-सच्चिदानन्दस्वरूपत्वं तदा सम्भावयति शोधनयुक्त्या । भो भगवन् ! सा शोधनयुक्तिः कथम् ? इत्थम्, अरे शिष्य ! इदं शरीरं दृश्यं जडम-नित्यममङ्गलं त्वं न भवसि । भो भगवन् ! दृश्यं जडमनित्यम-मङ्गलं कथम्, इत्थम् । एतच्छरीरस्योत्पत्तेः प्रागेतच्छरीरं तत्र नासीत्, यत इदं शरीरं त्वं न भवसि । एतच्छरीरादूर्ध्वमेतच्छरीरं तत्र न भविष्यति, यत इदं शरीरं त्वं न भवसि । आदावन्ते च यत इदं शरीरं तत्र नास्ति, अत इदं शरीरं त्वं न भवसि । अतो वर्तमानमपि इदं दृश्यं शरीरं त्वं न भवसि । किञ्च, ममेदं शरीरमिति प्रतीयते, अतस्त्वत्सकाशाद्भिन्नं त्वं द्रष्टा, इदं तव दृश्यं शरीरं त्वं न भवसि । दृष्टान्तेन परिहरति ।

यथा दाह्यप्रकाश्यकाष्ठाद्व्यतिरिक्तो दाहकः प्रकाशकोऽग्निः। तथा दृश्याद्देहात् द्रष्टा त्वं व्यतिरिक्त इति सिद्धम्॥ अन्यच्च, स्वप्नान्तरे दिव्यशरीरभेदमास्थाय तदुचितान्, भोगान्भुञ्जान एव प्रतिबुद्धो मनुष्यशरीरमात्मानं पश्यन् "नाहं देवो, मनुष्य एव" इति देवशरीरे बाध्यमानेऽपि, अहमास्पदमबाध्यमानम्, अतस्त्वं शरीराद्भिन्न एव, स्वप्ने स्वमरणादिदर्शनात। अपि च, "योऽहं कौमारे नानाक्रीडामन्वभवं सोऽहं स्थाविरे मुनिवृत्तौ स्थितः" एवं वदसि, तदा स्थविरकुमारशरीरद्वयं तस्य व्यवहारद्रष्टा इदं शरीरं दृश्यं त्वं न भवसि, द्रष्टा दृश्यादन्य इति प्रसिद्धो लोके न्यायः। दृश्यते च घटादिवत् "यथा घटादयो रूपादिमन्तश्चक्षुरादिभिः करणैरुपलभ्यन्ते, तथा देहोऽपि रूपादिमान्, चक्षुरादिभिः करणैरुपलभ्यते" अत इदं शरीरं तव दृश्यं त्वं द्रष्टा इति सिद्धम्॥ अपिच, जडत्वं प्रदर्शयति। तमःप्रधानविक्षेपशक्तिमदज्ञानोपहितचैतन्यादाकाश आकाशाद्वायुर्वायोरग्निरग्नेरापोऽद्भ्यः पृथिवी चेति, अपञ्चीकृत-पञ्चमहाभूतानि तन्मात्राख्यानि उत्पद्यन्ते। एतेषां सात्विकांशेभ्यः क्रमेण व्यस्ततया श्रोत्रत्वक्चक्षूरसनाघ्राणाख्यानि पंच ज्ञानेन्द्रियाणि, समस्ततया संशयनिश्चयस्मरणाहंकृतिवृत्तिमत् मनोबुद्धिचित्ताहंकाराख्यमन्तःकरणचतुष्कं च सम्भूतम्। राजसांशेभ्यो व्यस्ततया वाक्पाणिपादपायूपस्थाख्यानि पंचकर्मेन्द्रियाणि, समस्ततया प्राणापानसमानोदानव्यानाख्यं प्राणपंचकं च सम्भूतम्। तामसांशेभ्यः पञ्चीकृतपञ्चमहाभूतानि सम्भूतानि॥ "तद्यथोक्तम्। द्विधा विधाय चैकैकं चतुर्धा प्रथमं पुनः। स्वस्वेतरद्वितीयांशैर्योजनात्पञ्च पञ्चते" इति। तदानीमाकाशे शब्दोऽभिव्यज्यते, वायोः शब्दस्पर्शौ, अग्नौ शब्दस्पर्शरूपाणि, अप्सु शब्दस्पर्शरूपरसाः पृथिव्यां शब्दस्पर्शरूपरसगंधाश्च, इति। एतेभ्यः पञ्चीकृतपञ्चमहाभूतेभ्यो भूर्भुवःस्वर्महोजनस्तपःसत्याख्यानि उपर्युपरि

विद्यमानानि सप्त भुवनानि, अतलवितलसुतलरसातलतलातलमहातलपातालाख्यानि, अधोऽधो विद्यमानानि सप्त भुवनानि च, जरायुजाण्डजोद्भिज्जस्वेदजाख्यानि स्थूलशरीराणि, तदुचितानि अन्नपानादीनि एतदाधारभूतब्रह्माण्डं च सम्भूतम्। एतानि महाभूतानि त्वमेव जानासि, तानि स्वात्मानं न जानन्ति, परमपि न जानन्ति, अत्यन्तजडानि तानि त्वं न भवसि, तदंशोद्भवमिदं शरीरमपि त्वं न भवसि। स्वामिन्! तदंशोद्भवं कथम्? इत्थम् यत्काठिन्यं सा पृथिवी, यद्द्रवत्वं तदापः, यदौष्ण्यं तत्तेजः, यत्संचरति स वायुः, यत्सुषिरं तदाकाश इति। यतस्तानि सर्वाणि भूतानि अस्मिञ्छरीरे दृश्यन्ते, तानि स्थूलानि अस्थिमांसप्रभृतीनि, पञ्चविंशतिगुणात्मकानि पञ्च महाभूतानि संति, तेषां समूहात्मकमिदं जडशरीरं त्वं न भवसि। भो भगवन्! स्थूलशरीरे पञ्चमहाभूतानि पञ्चीकरणानि श्रूयन्ते पञ्च दृश्यन्ते, कानि तानि पञ्चविंशतिगुणानि। उच्यते। अस्थिमांसस्नायुत्वग्रोमाणि पृथिवी पञ्चधा भवति। रेतो मूत्रं स्वेदो लाला रक्तम्, एवमापः पञ्चधा भवंति। क्षुधातृषानिद्राकान्तिरालस्यम्-एवं तेजः पञ्चधा भवति। धावनं प्रसारणमुत्क्रमणं चलनं संकोचनम्, एवं वायुः पञ्चधा भवति। कटयुदरहृदयकण्ठशिरःस्थानेषु पञ्चधाकाशो भवति। तथा "कामः क्रोधस्तथा लोभो मोहो मात्सर्यमेव च। वियत्पंचविधं ज्ञेयमेष्टव्यं देहमध्यतः" इति ग्रंथान्तरम्॥ भो भगवन्! एकैकं भूतं पञ्चधा किम्? इति चेत्, उच्यते परस्परानुप्रवेशात्पञ्चीकरणं स्यात्, स्वामिन्! कस्य भूतस्य को वांशः कस्मिन्भूते प्रविष्टः, का स्थितिः? उच्यते। अस्थि मुख्या पृथिवी विचारबलात् तत्र काठिन्यपीतवर्णयोः सद्भावात्। मांसमुदकं, सद्रवत्वात्। स्नायुस्तेजः, ज्वरस्य परीक्षणात्। त्वग्वायुः स्पर्शधर्मत्वात्। रोमाकाशः, छेदने दुःखाभावात्। रेतो मुख्यमुदकं गर्भोत्पादकत्वात्। मूत्रं तेजः, ऊष्माङ्गत्वात्। स्वेदो वायुः।

श्रमप्रसंगत्वात्। लालाकाशः,ऊर्ध्वाधोगमनात्। रक्तं पृथिवी,लोहितत्वात्।क्षुधा मुख्योऽग्निः, पचनसमर्थत्वात् प्रसन्नत्वाच्च। तृष्णा वायुः, कण्ठोष्ठशोषणात्। निद्राकाशः,शून्यस्वभावत्वात्। कान्तिरुदकम्, शीतोष्णसम्बन्धत्वात, कृष्णलोहितत्वं भवति।आलस्यं पृथिवी,जाडयस्वभावत्वात्।धावनं मुख्यो वायुः, सबलत्वात्। प्रसारणमाकाशः, व्यापकत्वात्। उत्क्रमणं तेजः, उत्कृष्टव्यापारत्वात्। चलनमुदकम्, शिथिलत्वात् द्रवत्वाच्च। संकोचनं पृथिवी, जाडयत्वात्। शिरस्यवकाशो मुख्य आकाशः, अनाहतशब्दस्थानत्वात्। कण्ठस्थानेऽवकाशो वायुः, मुखनासिकयोः सञ्चरणत्वात्। हृद्यवकाशोऽग्निः, सर्वदोष्णस्थितित्वात्। उदरेऽवकाशो जलम्, जलाशयत्वात्। कट्यामवकाशः पृथिवी, गन्धस्थानत्वात्। एवं समूहात्मकं दृश्यं जडं त्वं न भवसि। भो भगवन्! सुखदुःखे जानत् कथं शरीरं जडम्। एतत् शृणु। देहो सुखदुःखे न जानाति, यतो भौतिको दृश्यो जडश्च भूतानि कदापि न जानन्ति,तदंशा अपि न जानन्ति। अतस्तदंशसंघातो देहः कथं जानीयात्। अपि च। देहः सन्नपि उत्थितं पतितं वा न जानाति, सुषुप्तौ चौरो गृहं प्रविश्यापहृत्याभरणानि याति, यतो देहो न जानाति अतोऽत्यन्तजडो दृश्यश्च, घटवत् इति। ननु घटो जातस्तथैव तिष्ठति, देहस्तु वर्धते, अतो घटवद्देहो वक्तुं न शक्यते, इति पृष्टो गुरुरुपदिशति। वृद्धिमान् इति, देहः किं चैतन्यं भवति वृद्धिमत्त्वमपि चैतन्यं नास्त्येव, त्वया कुत्र दृष्टम्, केनोक्तम्? एतद्दृष्टान्तेन परिहरति। तृणं गोमयं वा यत्र निक्षिप्यते स राशिः किं चैतन्यं भवति। घटीयन्त्रेण कूपादुदीर्यमाणा मृत्तिका तीरे वर्धमाना किं चैतन्य भवति, कुडयादिनिर्मात्रा मुहुर्मुहुर्निक्षिप्यमाणा वेदिकादौ वर्धमाना मृत्किं चैतन्यं भवति।एवं प्रतिदिनमन्नपानाद्यैः समर्प्यमाणो देहरूपो मृत्संचयः

सम्यक्वर्धमानोऽपि अत्यन्तजड एव, अतो देहो जडस्त्वं न भवसि। त्वं तु चैतन्यमेवेति सिद्धम्।अनित्यत्वं प्रदर्शयति। आकाशोऽवकाशी भवितुमिच्छति, पवनो धावितुमेव यतते, अग्निर्ज्वलितुमेवेहते,उदकं द्रवितुं जिगमिषति, पृथिवी विशीर्णा भवितुमिच्छति, एवं भूतानि सर्वाणि स्वस्वमार्गमभिगन्तुमिच्छन्ति, अतः शरीरस्यानित्यता निश्चिता। अमङ्गलत्वं प्रदर्शयति। जन्मकाले परामृश्यमानो देहो मलादत्यन्ताशुद्ध एव। रक्तरेतःसंयोगवशात् मलभाजननिष्पन्नो दशदोषदुष्टो देहस्त्वं न भवसि। भो भगवन्! के ते दोषाः? तच्छृणु। अशुद्धं, शोच्यं, दुर्गन्धिस्थितं, मलं, खण्डं, दग्धं, शिथिलं, नानारोगग्रस्तमध्रुवमामिषमित्यतोऽमङ्गलं शरीरं त्वं न भवसि। स्वामिन्! एतावता मम किं जातं हितम्। साधु साधु अरे! सावधानमतिः शृणु यदा इदं शरीरं त्वं न भवसि, तदा जातिवर्णाश्रमादिश्च ते नास्ति। जायते, अस्ति, वर्धते, विपरिणमते, अपक्षीयते, विनश्यति, एवं षड्भावविकाराश्च, तव न सन्ति।

वर्णधर्माश्रमाचारशास्त्रयन्त्रेण योजितः। निर्गतोऽसि जगज्जालात्पञ्जरादिव केसरी॥ वर्णाश्रमाभिमानेन श्रुतेर्दासो भवेज्जनः। वर्णाश्रमविहीनश्च वर्तते श्रुतिमूर्धनि॥ वर्णाश्रमौ धर्माधर्मावपि तव न स्त एव। यतः शास्त्रमाह।

'यावद्देहात्मविज्ञानं बाध्यते न प्रमाणतः। प्रामाण्यं धर्मशास्त्राणां तावदेवोपपद्यते' इति। अहं देहो न भवामि, इति ज्ञानं यदा जातं, तदा कर्तृत्वमपि ते नास्त्येव भो भगवन्! इदं स्थूलशरीरमहं न भवामि, त्वदाज्ञया ज्ञातम्, स्थूलशरीरासम्बन्धत्वात्। वर्णाश्रमकुलजातिस्त्रीपुरुषक्लीबस्थूलह्रस्वश्यामगौरनामरूपधर्माधर्मादि मम नास्त्येव तव कृपाकटाक्षात् सम्यक् मया ज्ञातम्। अन्यच्च स्वामिन्! इन्द्रियाणामभावे शरीरचलनायोगात् काणोऽहं बधिरोऽहमित्याद्यनुम-

वाच, इन्द्रियाण्यहम् । इति पृष्टो गुरुराह । तानि न भवसि । कथम्? इत्थम्, तदपि भूतकार्यमेव पूर्वमुक्तत्वात् । भो भगवन् ! कस्य भूतस्य किं कार्यम्, उच्यते । वाक् श्रोत्रे नभःसकाशात द्वे करणे समुत्पन्ने । त्वक्पाणी वायुसकाशा० । चक्षुष्पादौ तेजःसका० । रसनोपस्थे उदकसकाशा० । घ्राणपायू पृथिवीस० । पञ्चांशैः सह मनो जातम्, बुद्धिर्मनोविशेष एव । एतदेव विवृणोति । वाक्श्रोत्रे आकाशकार्ये एव विचारप्राधान्ये सति शब्दाभिव्यञ्जकत्वात्, प्रायेण शब्दोत्पत्तिर्वाचः । त्वक्पाणी वायुविकारौ स्पर्शग्रहणसाधनत्वात्, स्पर्शवत एवं द्रव्यस्य हस्तेनोपादातुं शक्यत्वात् । चक्षुष्पादौ तेजोविकारौ, रूपस्य ग्राहकत्वात्, प्रायेणोष्णत्वं पादयोर्विक्रमेणाऽप्यनुमेयम् । जिह्वोपस्थे आप्ये रसग्राहकत्वात्, स्निग्धत्वाच्च प्रायेणोपस्थस्यानन्दत्वात् । घ्राणवायू पार्थिवे, गन्धग्राहकत्वात्, प्रायेण गन्धवत्वाच्च पायोः । मनः पञ्चानां साधारणं कार्यम्, पञ्चवृत्तिग्राहकत्वात् बुद्धिर्मनोविशेष एव । प्राणः पञ्चवृत्तिर्वायुप्रधानः पञ्चानां कार्य एव । तदात्मकत्वेनोपलभ्यमानत्वात्, सर्ववृत्तिव्यापकत्वाच्च । एवंभूतानि जडानि तदंशसंयोगेन्द्रियाणि जडानि त्वं न भवसि । भो भगवन् ! स्वं स्वं विषयं जानन्ति कथं जडानीन्द्रियाणि । तच्छृणु। अरे! श्रोत्रमात्मानं न जानाति, परमपि न जानाति, स्वविषयं शब्दं ज्ञातुं नेष्टे, अन्यं विषयमपि ज्ञातुं न समर्थं उभयथा जडम् । किन्तु, शब्दज्ञानस्य करणं साधनमित्यर्थः प्रदीपवत् । यथा दीपो रूपादिज्ञानसाधनम, यथा दीपेन रूपादि गृह्यते तथा श्रोत्रेण शब्दमिति। एवमितराण्यपि करणानि। कर्मेंद्रियाणि क्रियासाधनान्येव, दर्वीवत्, अत्यन्तजडानि त्वं न भवसि इति सिद्धम् । त्वं तु ज्ञानमेव । भो भगवन् ! प्राणे सति देहश्चेष्टते इंद्रियाण्यपि चेष्टन्ते, प्राणे गते देहश्चेष्टाहीनो भवति, इंद्रि-

याण्यपि तादृशानि भवन्ति, अतः प्राण एवाहम् । तन्न भवसि कथम् ? चैतन्याभावात्, सुषुप्तौ. स्वप्ने वा उच्छ्वासनिःश्वासरूपेण वर्तमानोऽप्यन्तर्बहिश्चरन् न जानाति। चौरे गृहं प्रविश्यापहृत्याभरणानि गच्छति सति न जानाति, अतोऽत्यन्तजडा एव प्राणादयो देहवत् । अपि च एकस्मिन्पर्यंके शयने स्वस्त्रिया सह पुरुषे स्थिते सति, कस्मिंश्चिज्जारे आगत्य स्त्रिया सह भूषणानि परिहृत्य गच्छति सति, इत्थं न कर्तव्यमिति यतो न निवारयति, अतोऽत्यन्तं जडः । प्रबुद्धो जानाति, इति चेत् न सर्वावस्थासु उच्छ्वासनिःश्वासरूपेणाऽस्योपरतिर्नास्त्येव । स्थित्वाऽप्यसौ न जानाति । कथम ? इत्थम्, इदानीं कस्मिन्भागे श्वासो वर्तते इति पृष्टोऽपि 'अस्मिन्भागेऽहं वर्ते' इति प्रतिवक्तुं न जानाति, अतः स्थित्वापि न जानाति । ननु, जडश्चेत्प्राणः कथं जडं शरीरं जडोऽपि चेष्टयाति । उच्यते, लोके दृश्यते जडोऽपि जडं चेष्टयन् कुतः प्रचण्डमारुतो गृहाच्छादनपर्णशाखादीन् वृक्षांश्चान्यत्र पातयति, जडस्याऽप्ययमेव स्वभावः नैतावतात्मा भवति, प्राणस्य स्वचेष्टा न स्वतन्त्रा, किन्तु, कर्माधीनैव । कथम् ? इत्थम्, यदा जाग्रत्स्थितिनिमित्तं कर्मोद्भूतं भवति, तदा जीवो जागर्ति । तदुपक्षये सर्वाणि करणानि गृहीत्वा बुद्ध्युपाधिसम्पर्कजनितेन विज्ञानेन सह स्वप्नं वा सुषुप्तिं वा गच्छति, इत्येवं स्थानत्रयेऽनवरतं गमागमं कर्मनिमित्तमेव, प्राणोऽपि तत्कर्मवशादेव शरीरं परिपालयन्वर्तते, अन्यथा व्यापारचेष्टां कर्तुं न समर्थः, अतो जड एव प्राणस्त्वं न भवसि । भो भगवन् मनसि स्वस्थे पश्यति शृणोति, अहं संकल्पवान्, अहं विकल्पवान् इत्यनुभवाच्च, मनसि व्यग्रे श्रवणाद्यभावाच्च मन एवाहम् । तन्न भवसि । कथम् ? इत्थम्, इदानीं मे मनोऽन्यत्र गतम्, इदानीं स्थिरीभूतम्, इत्युभयवृत्तिं यो वेत्ति स मनो न

भवसि, मनसः साक्षी द्रष्टा त्वं भिन्न एव । अपि च । तन्मनः, सा बुद्धिरिति उच्यमाने, प्रतिक्षणं विलक्षणे अयुगपद्भावनियतयोरेकस्य नाशेऽन्यस्योत्पत्तिश्च अतो मन उत्पत्तिमत् विनाशवच्च अन्यथा सुप्तेरभावादिति तवैवानुभवः । अत्र श्रुतिरपि । आत्मनो हि मनो जातमिति तत्रैव लीयत, इति । अतो जडं मनस्त्वं न भवसि । एवमिन्द्रियसमूहात्मकं सप्तदशकं लिङ्गशरीरं त्वं न भवसि, इति सिद्धम् । भो भगवन् ! एतत्सत्यं लिङ्गशरीरमहं न भवामीति अनेन ज्ञानेन मम को लाभो भविष्यति । अरे ! सावधानमतिः शृणु— यदा लिङ्गशरीरं त्वं न भवसि, तदा गमनागमने स्वर्गनरकादिभोगोऽपि तव नास्त्येव, यथा जानुनि भग्ने पंगोरिव लिङ्गशरीरे भग्ने गमागमौ तव न स्तः । अपि च । प्रारब्धफलभोगोऽपि तव नास्त्येव, भो भगवन् ! तत्कथम् ? इत्थम्, । देहो भोगायतनम्, विषयाणि भोग्यानि, इन्द्रियाणि भोगसाधनानि, मनो बुद्धिर्भोक्ता, एवं भोगायतनम्, भोग्यं, भोगसाधनानि, भोक्ता, एतच्चतुष्टयं त्वं न भवसि, आरम्भककर्मफलभोगस्तव नास्ति । भो भगवन् ! जाग्रति स्वप्ने च सुखदुःखेऽहमनुभवन् कथं सुखं दुःखं च मम नास्ति । एतच्छृणु—अरे ! शरीरगतचक्षुःशूलोदरवेदनादयः सुषुप्त्यवस्थापन्नस्य बुद्धिरहितस्य तत्र न प्रतीयन्ते,अतस्तत्र ते धर्मा न भवन्ति, किन्तु क्षेत्रस्यैव, त्वयि मन्यते मूढः । यथा जलस्य धर्माश्चन्द्रे मन्यते मूढः । अतः शास्त्रमाह । "पुंसोऽलिङ्गशरीरस्य प्रियाप्रियोपसंहतिस्थितिः । अशरीरं वाव सन्तं न प्रियाप्रियौ स्पृशेते" इति । श्रुतिरपि । कामः संकल्पो विचिकित्सा श्रद्धाऽश्रद्धाधृतिरधृतिर्ह्रीर्धीर्भीरित्येतत्सर्वं मन एव । अत्र भगवद्वचनम् । "इच्छा द्वेषः सुखं दुखं संघातश्चेतना धृतिः । एतत्क्षेत्रं समासेन सविकारमुदाहृतम्" । स्मृतिरपि । " रागेच्छा सुखदुःखादि बुद्धौ सत्यां प्रवर्त्तते । सुषुप्तौ

नास्ति तन्नाशे तस्माद्बुद्धेस्तु नात्मनः " इति । अतोऽन्तःकरणधर्मा इत्यर्थः । इतिश्रुतिस्मृतिगुरुस्वानुभवाल्लिङ्गशरीरमहं न भवामि, इति यदा ज्ञानं जातं तदा नानायोनिभ्रमणभ्रंशो नवगुणरहितो भवति । स्वामिन् ! स नवगुणः कः ? बुद्धिरागप्रयत्नद्वेषसंस्कारधर्माधर्मसुखदुःखानि इति । भो भगवन् ! अन्तःकरणबाह्यकरणेष्वपि अहमन्नसंघातो देहो न भवामि, इन्द्रियाण्यपिन भवामि, प्राणोऽपि न भवामि, मनो बुद्धिरहं न भवामि,एतत्सर्वस्यानुसन्धाता ' मामहं न जानामि' , इति भ्रमश्चित्ते, अतः " कोऽहं देही" इति निःसंदेहं भ्रान्तिनाशं कुरु मम, इति विज्ञापितः सन् श्रीगुरुरुपदिशति । तत्कथम् ? इत्थम्, अरे ! सावधानमतिः शृणु–किं न जानासि तव कारणशरीरमव्याकृतमज्ञानसंज्ञकमस्ति । तत्कथम् ? इत्थम्, इदं दृश्यं सर्वं पृथक्पृथक् स्वरूपं त्वं न जानासि, आत्मानमेव न जानामि इति वदसि, इदमेव तवात्माज्ञानम्, इदमेव कारणशरीरम् । अस्याश्रयस्त्वमेव । तत्कथम् ? इत्थम् । त्वदन्यः कोऽपि न जानाति, त्वमेव वदसि'अहं मां न जानामि' इति। अतोऽस्याज्ञानस्य त्वमेवाश्रयः । अज्ञानभ्रमं च त्वमेव सम्यग्वेत्सि, अतस्त्वं जडो न भवसि, वेद्यवेत्तृत्वात् अतस्त्वं ज्ञानम्, तस्याज्ञानस्याश्रयः । किं ज्ञानं तत्, ज्ञानमपि त्वमेव, त्वयि स्थितमज्ञानं यतो न जानासि, अतस्तस्य पृथक् साक्षी त्वं, तव दृश्यमानं त्वं न भवसि, स्थूलशरीरसूक्ष्मशरीरवत्, अतः कारणशरीराद्भिन्नस्त्वम् । एवमाश्रितत्रिलक्षणज्ञानमात्रसाक्षिरूपस्त्वमेव मां कोऽहमिति वदसि तत्र निःसंशयं शृणु–इन्द्रियाणि स्वात्मानं स्ववृत्तिं च न जानन्ति, परस्परमपि न जानन्ति, अतो जडानि, त्वं त्विन्द्रियाणि, इन्द्रियवृत्तिं च सदा जानासि । एवं मनः स्वात्मानं न जानाति, परस्परबुद्ध्यादिव्यापारं कर्तुं न समर्थम्, अतो जडम् । त्वं तु मनोबुद्ध्यादि सदा

जानासि, अतस्तत्र स्वरूपं ज्ञानमेव । यथा" राहोः शिरः " शिर एव राहुः तथा ज्ञानमेव त्वम् । तथाच श्रुतिः । येन वा पश्यति, येन वा शृणोति, येन वा गन्धं जिघ्रति, येन वा वाचं व्याकरोति, येन वा स्वादुं चास्वादुं च विजानाति, तद्विज्ञानं ब्रह्म । यो वेत्ति विश्वं न च तस्य वेत्ता, तमाहुरग्र्यं पुरुषं पुराणम् । यस्य भासा सर्वमिदं विभाति । स्मृतिरपि "इन्द्रियाणि पराण्याहुरिन्द्रियेभ्यः परं मनः । मनसस्तु परा बुद्धिर्यो बुद्धेः परतस्तु सः " ज्ञानमात्रस्त्वमिति भावः ॥

अथ विधिमुखेन प्रतिबोधयति । यतो ज्ञप्तिस्वरूपस्त्वमतस्तत्राज्ञानं नास्ति, यथा सूर्ये तमः । अतस्तस्याज्ञानस्य निवर्तकं ज्ञानमपि तव नास्ति ज्ञानस्वरूपत्वात्, यथा दीपस्यान्यदीपेच्छा नास्त्येव प्रकाशस्वरूपत्वात् । तस्मादज्ञानज्ञानोद्भवौ बन्धमोक्षावपि तव न स्तः, अतो नित्यमुक्त एव त्वम् । यतः शास्त्रमाह । "अनात्मन्यात्मधीर्बन्धस्तन्नाशो मोक्ष उच्यते । बन्धमोक्षौ न विद्येते नित्यमुक्तस्य चात्मनः" अतस्त्वं चिद्रूपः ॥

सत्स्वरूपं दर्शयति । पञ्चकोशात्मकावस्थत्रितयेऽबाधितत्वात्सत्स्वरूपस्त्वम् । तथा हि । अज्ञानं तु समष्टिव्यष्ट्यभिप्रायेणैकमनेकमिति व्यवह्रियते । यथा वृक्षाणां समष्ट्यभिप्रायेण "वनम्" इत्येकत्वव्यपदेशः, व्यष्ट्यभिप्रायेण "वृक्षाः" इत्यनेकत्वव्यपदेश इति।एवम् एतदज्ञानोपहितं चैतन्यं समष्टितया "ईश्वर" इति, व्यष्टितया " प्राज्ञ " इति चोच्यते । अज्ञानं त्वानन्दप्रचुरत्वात् "आनन्दमयः कोशः" । १ । सर्वोपरमत्वात् "सुषुप्तिः" इति चोच्यते । आवरणविक्षेपशक्तिद्वयवत् अज्ञानोपहितं चैतन्यं स्वप्रधानतया निमित्तम्, स्वशरीरोपाधिप्रधानतयोपादानं च भवति । यथा लूता तन्तुः स्वकार्यं प्रति स्वप्रधानतया निमित्तं स्वशरीरोपाधिप्रधानतयोपादानं च भवति । ज्ञानेन्द्रियैः सह बुद्धिः " विज्ञा-

नमयः कोशः" । २ । समनस्कज्ञानेन्द्रियाणि " मनोमयकोशः " । ३ । सप्राणकर्मेन्द्रियाणि " प्राणमयकोशः " । ४ । एतत्कोशत्रितयोपहितं चैतन्यं समष्टितया "हिरण्यगर्भ" इति, व्यष्टितया " तैजस " इति चोच्यते कोशत्रितयं स्थूलशरीरापेक्षया सूक्ष्मशरीरं जाग्रद्वासनामयत्वात् " स्वप्न " इति च व्यपदिश्यते। स्थूलशरीरमन्नमयत्वात् " अन्नमयःकोशः " । ५ । स्थूलभोगायतनत्वाच्च "स्थूलशरीरं जाग्रत्" इति चोच्यते। एतदुपहितं चैतन्यं समष्टितया " वैश्वानरो विराट् " चेति, व्यष्टितया " विश्व " इति चोच्यते। आभ्यां महाप्रपञ्चतदुपहितचैतन्याभ्यां तप्तायःपिण्डवदविविक्तं सदनुपहितं शुद्धचैतन्यं " सर्वं खल्विदं ब्रह्म " इति महावाक्यस्य वाच्यं, विविक्तं सल्लक्ष्यमिति चोच्यते । एवमवस्थात्रितयाबाधितत्वात्सत्स्वरूपस्त्वम् । यथा वा। चक्षुरादीनि करणानि आदित्याद्यनुगृहीतानि स्वस्वविषयेषु प्रवर्त्तन्ते । तत्र बुद्धिः करणव्यापारमनुभवति । स्वचैतन्योज्ज्वलितोभयात्मका द्रष्टुर्दृश्याकारा विपरिणमते यत् तज्जागरणं भवति। तस्य साक्षी त्वं चैतन्यः। जाग्रत्संस्कारप्रत्ययवासनावासिता बुद्धिः पुष्पपुटवत् त्वं चैतन्योज्ज्वलितोभयात्मिका द्रष्टुर्दृश्याकारा विपरिणमते यत् तत्स्वप्नं भवति चित्रपटवत् । तस्य साक्षी पृथग्भूतस्त्वमेव ॥ जाग्रत्स्वप्नावस्थोद्भूतसर्वसंस्कारैः सह बुद्धिः स्वात्ममूलाविद्यायां लीना सती; साऽविद्या संस्कारमात्रावशिष्टा त्वयि विश्रम्य निर्विकल्पानुभवा भूत्वाऽवतिष्ठते, इयं सुषुप्तावस्था॥न कंचन कामं कामयते, न कंचन स्वप्नं पश्यति, सुखस्वरूपमेवेति यो वेत्ति, स त्वं साक्षिस्वरूपः । एवमवस्थात्रयभावाभावसाक्षी अनुस्यूतः पृथग्भूतचैतन्यस्त्वम्, अतस्त्वं कालत्रयस्थायी सर्वदा भावरूप इत्यर्थः। अन्यस्य सत्तामसत्तां च स्वयं जानासि, स्वसत्ता स्वत एव प्रमाणम् । स्वसत्ताज्ञानाश्रयं विना न सम्भवति, अतः स्वसत्ता स्वानुभवसिद्धा,

अतस्तव स्वरूपं सद्रूपम् ॥ आनन्दरूपतां दर्शयति । व्यावृत्तेष्विन्द्रियेषु स्वस्वविषयात्, अत्यन्तश्रमितानि सन्ति । त्वयि सुखस्वरूपे विश्राम्यन्ति । सुखरूपवन्ति तूत्थाय स्वस्वव्यापारे समर्थानि भवन्ति, पटसुगन्धवत्, अतस्तव स्वरूपमानन्दरूपम् ॥ अद्वितीयत्वं दर्शयति । ब्रह्मादिपिपीलिकान्तमन्तर्यामितयाऽनुस्यूतत्वात्साक्षी त्वमेक एव, अतस्तव स्वरूपमद्वितीयम् । तथा च । श्रुतिः ।" एको देवः सर्वभूतेषु गूढः, सर्वव्यापी सर्वभूतान्तरात्मा ।

कर्माध्यक्षः सर्वभूताधिवासः, साक्षी वेत्ता केवलो निर्गुणश्च " इति साक्षी सप्रपञ्चः सद्वितीयः किं न भवति ? शृणु—मृद्विकारेषु मृदिव, सुवर्णविकारेषु सुवर्णमिव, तन्तुविकारेषु तन्तुरिव, चिद्विवर्तेषु चिदेव, रज्जुसर्पवत्, शुक्तिकारजतवत्, अतस्त्वमद्वितीयः । अखण्डत्वं प्रदर्शयति । विजातीयसजातीयस्वगतभेदरहितत्वात् एकरसोऽखण्डस्त्वं, सैन्धवघनवत् । जन्ममृत्युरहितत्वादचलस्त्वम् । अनादित्वात्, कारणरहितत्वादजरत्वम् । अक्रियत्वं दर्शयति । यथा भ्रामकसन्निधिसत्तामात्रेण जडमयं लोहं चेष्टते, तथाऽहंकारममकारेच्छारागद्वेषप्रयत्नरहितस्य सच्चिदाऽऽनन्दरूपस्य तव सत्तासन्निधिमात्रेण देहेन्द्रियप्राणमनोबुद्धिसकाशात् सदसत्क्रिया उत्पद्यन्ते, अतस्तव स्वरूपमक्रियम् । तथा च "आत्मचैतन्यमाश्रित्य देहेन्द्रियमनोधियः । स्वकीयार्थेषु वर्त्तन्ते सूर्यालोकं जना इव ॥ अत्र भगवानाह । शरीरवाङ्मनोभिर्यत्कर्म प्रारभते नरः । न्याय्यं वा विपरीतं वा पञ्चैते तस्य हेतवः" अतस्तव स्वरूपमक्रियम्, अग्न्यौष्ण्यवत् सवितृप्रकाशवत् । कूटस्थं निर्विकारि कूटवत्तिष्ठतीति अतस्त्वं कूटस्थः । अव्यक्तादि पृथिव्यन्तं सर्वतत्त्वेषु पूर्वं व्यापकं चैतन्यम्, यथा घटोत्पत्तेः पूर्वं व्यापकं नभः,अतस्त्वमनन्तः इति ॥

"तव दृश्यमानमिदं सर्वं त्वं न भवसि" इति तवानुभवः, "सच्चिदानन्दरूपस्त्वमिति तवैव स्वसंवेद्यम्" अतस्त्वं स्वयंज्योतिः । " बृहत्त्वाद्बृंहणत्वाद्वा प्रत्यगात्मेति चोच्यते । तत्त्वं ब्रह्म परं ब्रह्म गीयते बहुधा श्रुतिः " इत्यतो ब्रह्म त्वम् ॥ इत्येतैर्द्वादशभिर्विशेषणैर्विशिष्टं परं ब्रह्म तदेवाहमिति प्रतिपद्यते । यथा नीलमहत्सुगन्धवदुत्पलं तथा नित्यशुद्धबुद्धमुक्तलक्षणवत्त्वमिति तवैवानुभवो जातः । अत्र श्रुतिस्तव प्रमाणम् । प्रज्ञातस्य नामधेयानि, आत्मैवेदमेक एवाग्र आसीत्, तद्वैतत् सृष्ट्वा तदेवाऽनुप्राविशत्, अन्तःप्रविष्टः शास्ता जनानाम्, अनन्तरमबाह्यमित्यादि । स्मृतयश्च । क्षेत्रज्ञं चापि मां विद्धि । नवद्वारे पुरे देहे । अनादित्वान्निर्गुणत्वादित्यादि । एवं वेदवाक्यतो गुरुतः स्वतश्च त्रिप्रकारेण "ब्रह्माहमस्मि" इति ज्ञात्वा मुक्त इति । तथा च श्रुतिः । " वेदाहमेतं पुरुषं महान्तमादित्यवर्णं तमसः परस्तात् । तमेव विदित्वाऽतिमृत्युमेति, नाऽन्यः पन्था विद्यतेऽयनाय " इति । पुनश्च । "अन्यथा शास्त्रगर्तेषु लुठतां भ्रमतामिह । भवत्यकृतप्रज्ञातां कल्पैरपि न निर्वृतिः । यावदज्ञानभावः स्यात्तावद्वै भेदभावना । भेदभावनयोदेति सर्वस्मिन्नेकतालयः।ज्ञानं भक्तिं च वैराग्यमेतदेव न संशयः । ज्ञात्वैक्यं सहजं प्रेम विवेकेनैव नान्यतः।"तस्मात्साधनान्तरं नास्ति।अत्र भगवद्वचनम्॥"य एवं वेत्ति पुरुषं प्रकृतिं च गुणैः सह।सर्वथा वर्तमानोऽपि न स भूयोऽभिजायते।बहूनां जन्मनामन्ते ज्ञानवान्मां प्रपद्यते।वासुदेवः सर्वमिति स महात्मा सुदुर्लभः।"तस्मात्सर्वमहं वासुदेवाख्यमव्ययमिति ज्ञातव्यम् ।एतदेव ज्ञेयं संस्थितम् । नातःपरं वेदितव्यं हि किञ्चित्,एक एवात्मा परं ब्रह्म संसारधर्मविमुक्तस्त्वमिति सिद्धम् । महावाक्यानुसन्धानस्यैवेदं फलमिति, अतः पुनश्च शृणु-

इदं महावाक्यं सम्बन्धत्रयेणाऽखण्डार्थबोधकं भवति । सम्बन्धत्रयं किम्,? सामानाधिकरण्यम्, विशेषणविशेष्यता,लक्ष्यलक्षणभावश्चेति।सामानाधिकरण्येऽखण्डितार्थबोधकता कथम् ? यथा "सोऽयं देवदत्त" इत्यस्मिन्वाक्ये,देशकालादिभेदवाचकयोः सोऽयमितिपदयोरेकस्मिन्पिण्डे तात्पर्यसम्बन्धः । तथाऽस्मिन्महावाक्ये परोक्षत्वापरोक्षत्वादिभेदवाचकयोस्तत्त्वंपदयोरेकस्मिंश्चैतन्ये तात्पर्यसम्बन्धः।विशेषणविशेष्यभावे कथम्?यथा तत्रैव सोऽयंपदार्थयोः भेदविशिष्टदेवदत्तयोरन्योन्यभेदव्यावर्त्तकता, तथाऽत्र तत्त्वंपदार्थयोः भेदविशिष्टचैतन्ययोरन्योन्यभेदव्यावर्तकता । लक्ष्यलक्षणभावेन कथम्?यथा तत्रैव वाक्ये सोऽयंपदयोस्तदर्थयोर्वाविरुद्धांशत्यागेन देवदत्ते लक्ष्यता । तथाऽत्रापि तत्त्वंपदयोस्तदर्थयोर्वा विरुद्धांशत्यागेन चैतन्ये लक्ष्यता इति । इयमेव भागलक्षणेत्युच्यते ॥ भगवन् लक्षणा का॥ श्रुतवाक्यस्य मुख्यार्थविरोधे मुख्यार्थसम्बन्धिनि अन्यपदार्थे लक्षणा । सा कतिधा त्रिधा । कास्ता विधाः शृणु । जहत्स्वार्था- अजहत्स्वार्था,भागत्यागा चेति त्रिभिरेव चैतन्यं कथं न लक्ष्यते,तिसृणां भिन्नविषयत्वात् कस्याः को विषयः। शृणु, गंगायां घोषः प्रतिवसति इत्यत्र गंगा, प्रवाहस्य घोषाधारतानुपपत्तेः । सर्वथा स्वार्थपरित्यागेन तत्सम्बन्धिनि तीरे जहत्स्वार्था संगच्छते । अत्र तु तत्त्वंपदार्थयोर्विशेष्यांशस्य चैतन्यस्यैकत्वात् सर्वथा स्वार्थपरित्यागाऽसम्भवान्न संगच्छते । तथा "काकेभ्यो दधि रक्ष्यताम्" इत्यत्र काकपदस्य स्वार्थापरित्यागेनैव दध्युपघातके अजहत्स्वार्था संगच्छते, अत्र तु विशेषणयोरत्यागेनैव यस्मिन्कस्मिंश्चिद्वस्तुनि लक्ष्यत्वेऽपि न सम्भवेत् । तस्माद्यथा सोऽयं देवदत्त इति वाक्यवत्पूर्वोक्ता भागत्यागलक्षणा संगच्छते । एवं वाक्यार्थेनाखण्डार्थेऽवबोधितेऽविकारिणो नित्यशुद्धबुद्धमुक्तसत्यस्वभावपरमानन्दानन्ताद्वयं ब्रह्मास्मीति अखण्डाकाराकारिता चित्तवृत्तिरुदेति ।

सा तु चित्प्रतिबिम्बसहिता सती प्रत्यगभिन्नमज्ञातं परं ब्रह्म विषयीकृत्य तद्गतमज्ञानमेव बाधते । तदा पटकारणतन्तुदाहे पटदाहवदखिलकारणेऽज्ञाने बाधिते सति, तत्कार्यस्य सकलस्य बाधितत्वात्तदन्तर्भूताखण्डाकाराकारिता चित्तवृत्तिरपि बाधिता भवति । तत्र प्रतिफलितं चैतन्यमपि यथा दीपप्रभाऽऽदित्यप्रभावभासनाऽसमर्था सती तयाऽभिभूता भवति, तथा स्वयंप्रकाशमानप्रत्यगभिन्नपरंब्रह्माऽवभासनाऽनर्हतया तेनाभिभूतं सत् स्वोपाधिभूताखण्डाकारवृत्तेर्बाधितत्वाद्दर्पणाऽभावे मुखप्रतिबिम्बस्य मुखमात्रवत्प्रत्यगभिन्नं परंब्रह्ममात्रं भवति । एवं च सति मनसैवानुमन्तव्यम्, 'यन्मनसा न मनुते' इत्यनयोरविरोधः । वृत्तिव्याप्यत्वाङ्गीकारेण फलव्याप्यत्वप्रतिषेधप्रतिपादनात् । तदुक्तम् । फलव्याप्यत्वमेवास्य शास्त्रकृद्भिर्निराकृतम् । ब्रह्मण्यज्ञाननाशाय वृत्तिव्याप्तिरपेक्षितेति, 'स्वयंप्रकाशमानत्वान्नाभास उपयुज्यत,' इति च । जडपदार्थाकाराकारितचित्तवृत्तेर्विशेषोऽस्ति । तथा हि 'अयं घटः' इति घटाकारितचित्तवृत्तिरज्ञातं घटं विषयीकृत्य तद्गताज्ञाननिरसनपुरःसरं स्वगतचिदाभासेन घटं स्फुरयेत्, यथा दीपप्रभामण्डलमन्धकारगतं घटपटादिकं विषयीकृत्य तद्गतान्धकारनिरसनपुरःसरं स्वप्रभया तदपि भासयतीति । एवंभूतस्वस्वरूपचैतन्यसाक्षात्कारपर्यन्तं श्रवणाद्यपेक्षत इति ।

एवं त्वमभयं प्राप्तोऽसि, संसारदुःखैर्मुक्तः, एवं विमृश्य यथेच्छसि, तथा कुरु । अतस्त्वं वेदकिंकरो न भवसि । यतः शास्त्रमाह ।

"आत्मानमद्वयं कश्चिज्जानाति जगदीश्वरम् । यद्वेत्ति तत्स कुरुते न भयं तस्य कुत्रचित् । आत्मैवेदं जगत्सर्वं ज्ञातं येन महात्मना । यदृच्छया वर्तमानं तं निषेद्धुं क्षमेत कः ।" भो भगवन् ! यद्यपि ज्ञानोत्पत्त्यनन्तरं पुनर्जन्माभाव उक्तः, तथापि ज्ञानोत्पत्तेः प्राक् अत्र जन्मनि कृतानां कर्मणामुत्तरकालफल-

भाविनां च यानि चातिक्रान्तानि, अनेकजन्मकृतानि, तेषां च फलमदत्त्वा नाशो न युक्तः, तस्मात् सञ्चितप्रारब्धागामिरूपाणि त्रिप्रकाराणि कर्माणि त्रीणि जन्मान्यारभेयुः, अन्य था कृतविनाशे सर्वत्रानवस्थाप्रसङ्गः " नाभुक्तं क्षीयते कर्म कल्पकोटिशतैर पि । अवश्यमेव भोक्तव्यं कृतं कर्म शुभाशुभम् " इति शास्त्रानर्थक्यं च स्यादि ति ॥

तत्र, "ज्ञानाग्न्युपस्पृष्टानि सर्वकर्मबीजानि दह्यन्ते नाङ्कुरयन्ति ।तत्र श्रुतिः। "बीजान्यग्न्युपदग्धानि न रोहन्ति यथा पुनः । ज्ञानदग्धैस्तथा क्लेशैर्नात्मा सम्पद्यते पुनः" इति अस्तु तावत् ज्ञानोत्पत्तेरुत्तरकालकृतानां कर्मणां ज्ञानेन दाहो, ज्ञानसहभावित्वात् नात्विह जन्मनि ज्ञानोत्पत्तेः प्राक्कृतानां कर्मणां ज्ञानेन दाहो युक्तः । तन्न, "तथाहि संचितं क र्म । तस्य तावदेव चिरं यावन्न विमोक्ष्येऽथ संपत्स्ये,इषीकातूलवत्सर्वाणि कर्माणि प्रदह्यन्ते''इति श्रुतेः। "ज्ञानाग्निः सर्वकर्माणि भस्मसात्कुरुते तथा"इति स्मृतेश्च ज्ञानाग्निना इषीकातूलवत् दह्यंते । भो भगवन् ! "सर्वाणि कर्माणि" इति विशेषणात् यथा वर्तमानजन्मारम्भकानि न क्षीयन्ते फलदानाय प्रवृत्तानि, एवं सत्यपि ज्ञाने तथाऽनारब्धफलानामपि कर्मणां क्षयो न युक्त इति । तदसत् ॥ प्रारब्धं तु, पूर्वं लक्ष्यवेधाय धनुषो मुक्त इषुर्लक्ष्यं वेधयित्वाऽपि आरब्धवेगक्षयं यावत्प्रयोजनं विनैव प्रवर्तते यथा, तथा शरीरस्थितिप्रयोजने निवृत्तेऽपि संस्कारवेगक्षयं यावत्पूर्ववत्तिष्ठत्येव ॥ किं बहुना, देहयात्रार्थमिच्छानिच्छापरेच्छाप्राप्तानि आरोपितसुखदुःखात्मकारब्धफलान्यनुभवन्नन्तःकरणादीनामवभासकः सन् तिष्ठत्येव आप्रारब्धक्षयात । जीवन्मुक्तानां पुनर्जन्माभावः । तथाच । "शास्त्रेण नश्येत्परमार्थबुद्धिः कार्येक्षणं[1] नश्यति चापरोक्षात् । प्रारब्धनाशा-

१ कर्तव्यतादृष्टिः ।

त्प्रतिभासनाशो ह्येव क्षणान्नश्यति चात्ममाया" इति । कर्मणो मायामूलत्वात् मायानाशे सर्वं कर्म भस्मसाद्भवेत् । ज्ञानोत्पत्त्यनन्तरं भवतामागामि कर्मणां 'तदधिगमे उत्तरपूर्वाघयोरश्लेषविनाशौ' इति श्रुतेः । ज्ञानिना सहाऽस्पर्शएव भवति ॥ स्वामिन् ! स्वेच्छया कृतानां कर्मणां शरीरान्तरेण भोगो भवतु । तन्न, तस्य कर्मफलोपचयकर्तृत्वाभिमानो नास्त्येव, असंगो नहि सज्जेत,एते इच्छादयः क्षेत्रधर्मा आत्मन्यारोप्यंते । "सदृशं चेष्टते स्वस्याः प्रकृतेर्ज्ञानवानपि" "इति ध्यायतीव लीलायतीव"इति"गुणा गुणेषु वर्तंते"इत्याद्यनुसन्धानेन शरीरयात्रास्थितिः,अन्यथा सा न सिद्ध्येत्।तथा च। "गतसंगस्य मुक्तस्य ज्ञानावस्थितचेतसः।यज्ञायाऽऽचरतः कर्म समग्रं प्रविलीयते"इति ॥ अरे ! जीवन्मुक्तस्य प्रारब्धक्षये,शरीरपातादनु विभागं शृणु–"तस्य पुत्रा दायमुपयन्ति, सुहृदः साधुकृत्यम्,द्विषन्तः पापकृत्यम्। न तस्य प्राणा उत्क्रामन्ति,अत्रैव समवलीयन्ते" इति किंच "प्रारब्धं निश्चयाद्भुंक्ते शेषं ज्ञानेन दह्यते। शारीरं त्वितरत्कर्म तद्दोषप्रियकारिणोः।अनारब्धं हि ज्ञानेन निर्बीय क्रियते तथा"। अपि च। अस्य जीवन्मुक्तस्य प्रारब्धभोगार्थं शरीरधारणे को दोषः, बाधिताऽविद्याबीजत्वात्, उत्खातदंष्ट्रोरगवत् । अविद्यानाशे तत्कार्यं किं करिष्यति इति । भो भगवन् ! कारणनाशे कार्यमस्ति तन्तुनाशे पटोऽस्तीति, कुत्र दृष्टं केनोक्तं वा । उच्यते । लोके चैतद्दृश्यते, यथा रज्जुस्वरूपे ज्ञाते, सर्पज्ञानं निवर्तते, तथापि भयजनितं कम्पादिकं वर्तते । " यथाऽहिनिर्ल्वयनी वल्मीके मृता प्रत्यस्ता शेते एवमेवेदं जीवन्मुक्तशरीरम, अस्मिन्नविद्याशरीरे पतिते स्थिते वा स मुक्तो, दग्धपटवत्" इति श्रुतिः। सदैव मुक्त इति स्वभावतस्त्वं नित्यमुक्त एव त्वमिदानीमपि तथा । यथा स्वप्नद्रष्टा स्वप्नगतभयेनैव प्रबुद्धः स्वप्नव्यवहारे सर्वस्मिन्मिथ्याभूते निरस्ते सति सत्यस्वरूपं स्वयमेवाऽवशिष्यते,

तथैव भ्रान्तिमूलसंसारमहास्वप्नव्यवहारे सर्वस्मिन्मिथ्याभूते निरस्ते, सत्यस्वरूपं स्वयमेवावशिष्यते ॥ भो. भगवन् ! प्रारब्धकर्मक्षयात् शरीरनाशः, शरीरनाशात्पुनर्जन्माऽभावस्ततः सर्वविशेषरहितं शून्यमेव जातम्, तर्हि " नैवाहमिदम् " इत्युच्यते । किंच प्रमाणाऽविषयत्वान्नास्ति ब्रह्मेति प्रसज्यते । कथं सत्यस्वरूपं स्वयमेवावशिष्यते, इत्येतदङ्गीकरणीयम् । तत् शृणु–" विमुच्यापि त्वचं सर्पः स्वस्वरूपं न मुञ्चति । नास्त्यात्मेति च यो हेतुरिति वक्तुं न युज्यते " । किंच " अमावस्यां यथा चन्द्रो दृश्यते नार्कयोगतः । तथात्मा ज्ञानयोगेन भासते न स्फुटः परः" । किंच । यथा " चन्द्रो ह्यमावस्यामलिङ्गत्वान्न दृश्यते । दृश्यक्षयात्तथा द्रष्टुर्व्यवहारो न दृश्यते" इति । एवं विवर्तरूपत्वाद्दृश्यस्याऽध्यारोपाऽपवादाभ्यामधिष्ठानावशेषत्वं स्यात् ॥ " सतत्त्वतोऽन्यथा पृथा विकार इत्युदीरितः । असत्त्वतोऽन्यथा पृथा विवर्त इत्युदीरितः " । सुवर्णे कटकवत्, शुक्तौ रजतवच्च विकारविवर्तौ ॥ असर्पभूतायां रज्जौ सर्पाऽऽरोपवत् वस्तुन्यवस्त्वाऽरोपोऽध्यारोपः । यथा शिष्यबोधार्थमवस्त्वपि जगत् ब्रह्मण्यारोप्यते । रज्जुविवर्तस्य सर्पस्य रज्जुमात्रत्ववत् वस्तुविवर्तस्याऽवस्तुनोऽज्ञानादेः प्रपञ्चस्य वस्तुमात्रत्वमपवादः, । यथा " नेह नानास्ति किंचन, अनण्वस्थूलोऽह्रस्व " इति, " वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम् इति, यतो वाचो निवर्तन्ते अप्राप्य मनसा सह " इत्यादि निषेधस्य सावधिकत्वात् । अत एव सत्यस्वरूपमवशिष्यते, यन्निषेधद्वाराऽसदुक्तं तत्सर्वं प्रपञ्चस्य तत्त्वाऽऽत्मनः । यदाऽऽत्मनोऽसदुक्तं स्यात्, तदा वन्ध्यापुत्रेण कार्यं कथं न निर्वहति।अतएव सदेवाऽत्मा प्रमाणसिद्धम्।तथा च श्रुतिः " सदेव सौम्येदमग्र आसीत्, सत्यं ज्ञानमनन्तं ब्रह्म " इति "अविनाशि तु तद्विद्धि येन सर्वमिदं ततम् " । इत्यादि स्मृतिश्च ॥ किंच ।

ब्रह्मसद्भावे प्रमाणाऽपेक्षा नास्ति, स्वतःप्रमाणं ब्रह्म, जाग्रदाद्यवस्थात्रयेषु प्रमातृ-
त्वाऽव्यभिचारात्। कूटस्थनित्यत्वसिद्धिः । सुषुप्तौ व्यभिचरतीति चेत् न,
तत्रापि प्रमेयत्वमेव निवारयन्ति सर्वे लोकाः। कथम्? "नाहमत्र सुषुप्तौ किंचि-
दुपलब्धवान्" इति प्रमातृत्वं स्वतःसिद्धम्। असिद्धस्य हि वस्तुनः पुरः
स्थितिं प्रति प्रमाणाऽपेक्षा, नतु नित्यसिद्धस्यात्मनः। आत्मनश्च यदि
प्रमाणापेक्षा स्यात् तदा कस्य प्रमातृत्वं स्यात्। 'यस्य प्रमातृत्वं स एव
बोधात्मा' इति निश्चीयते। अत एव स्वतः सिद्ध एवात्मा। न तस्य प्रमाणा-
पेक्षा ॥ यदिदं दृश्यजातं भाति, तदविद्यया कृतं प्रतीतिमात्रम्, कूटस्थ-
नित्यतासिद्धित्वादात्मसत्ता सामान्यमनुस्यूतं वर्तत एव ॥ "नाभावो विद्यते
सतः" सत् स्थूलं कार्यम् असत् सूक्ष्मं कारणं तत्सर्वं चिद्विवर्तरूपेण ब्रह्मैव
भाति। तथा च। "विस्तारः सर्वभूतस्य विष्णोर्विश्वमिदं जगत्।
द्रष्टव्यमात्मवत्तस्मादभेदेन विचक्षणैः। नहि ज्ञानादृते भावाः केनचिद्वि-
षयीकृताः। ज्ञानादृते नार्थसत्ता ज्ञानरूपं ततो जगत्" इति। यस्मात् ज्ञाना-
दृते नास्ति पदार्थसत्ता, तस्माज्ज्ञानमेव सत्यम्। ज्ञानं तु कथमेकं
बहुधाकारं भवति। तत् शृणु। अनिर्वाच्या महती मायालक्षणा
या शक्तिरस्ति सैव नानात्वं प्रकटयति। तथा च श्रुतिः। "इन्द्रो
मायाभिः पुरुरूप ईयते"। ननु "द्वावेतौ ब्रह्मणो रूपम्" इत्युक्तत्वात्,
वास्तवं द्वैतं भवतु। मैवम्, अविद्यया कृतं द्वैतमिव नतु वास्तवम्। "यत्र
हि द्वैतमिव भवति, तदितरः इतरं पश्येत् इतरः इतरं जिघ्रेत्"। "यत्र त्वस्य
सर्वमात्मैवाभूत्, तत्केन कं पश्येत्,केन कं जिघ्रेत्। येनेदं सर्वं विज्ञातम्, तं केन
विजानीयात्। नाऽन्योऽतोऽस्ति द्रष्टा, नाऽन्योऽतोऽस्ति श्रोता, नाऽन्या-
ऽतोऽस्ति मन्ता, नाऽन्योऽतोऽस्ति विज्ञाता, यदयं सर्वमात्मा,विज्ञातारमरे केन

विजानीयात्" इति। एतत्सर्वमखिलमात्मैव अतस्तद्भासकं नित्यशुद्धबुद्धमुक्तस्वभावं प्रत्यक्चैतन्यमेवात्मतत्त्वमिति वेदान्तविदनुभवः। इत्थं श्रुतिगुरुप्रसादेनोत्पन्नसाक्षात्कारः सर्वस्मिन्मिथ्यात्वनिश्चयो व्युत्थानेऽपि समाधिनिष्ठो जीवन्मुक्तः प्रारब्धजनितफलावधि लोकमनुगृह्णन् पूर्ववत् यथाप्राप्तानुवर्ती तिष्ठति। शास्त्रमपि। "ज्ञात्वाऽप्यसर्पं सर्पोत्थं यथा कम्पं न मुञ्चति। विध्वस्ताखिलमोहोऽपि मोहकार्यं तथाऽऽत्मवित्" इति भो भगवन्! समाधिः कतिधा। अरे! शृणु-द्विधा सविकल्पो निर्विकल्पश्चेति। तत्र ज्ञात्रादिभेदाऽलयवती ब्रह्माकारवृत्तिः सविकल्पः। तदा मृन्मयघटादिभाने मृद्भानवत्, द्वैतभानेऽप्यद्वैतं वस्तु भासते। निर्विकल्पस्तु। ज्ञात्रादिविकल्पहीना ब्रह्माकारा वृत्तिः। तदा जलेन मिलितस्य लवणस्य जलमात्राऽवभासवत् अद्वितीयं वस्तुमात्रं भासते। ततश्चास्य सुषुप्तेश्चाभेदशङ्का नास्ति। उभयत्र वृत्त्यभाने समानेऽपि तत्सद्भावासद्भावमात्रेण तयोर्भेदोपपत्तेः। यस्याङ्गानि। "यमनियमासनप्राणायामप्रत्याहारधारणाध्यानसमाधयः"। तत्राहिंसाऽस्तेयब्रह्मचर्याऽपरिग्रहाः "यमाः"। शौचसन्तोषतपःस्वाध्यायेश्वरप्रणिधानानि "नियमाः"। करचरणादिसंस्थानविशेषलक्षणानि पद्मकस्वस्तिकादीनि "आसनानि"। रेचकपूरककुम्भकलक्षणाः प्राणनिग्रहोपायाः "प्राणायामाः" इन्द्रियाणां स्वस्वविषयेभ्यः प्रत्याहरणं "प्रत्याहारः"। अद्वितीयवस्तुन्यन्तरिन्द्रियावधारणं "धारणा"। तत्राद्वितीयवस्तुनि विच्छिद्य विच्छिद्यान्तरिन्द्रियप्रवाहो "ध्यानम्" समाधिरुक्तः सविकल्प एव॥ एवमङ्गिनोऽस्य निर्विकल्पस्य लयविक्षेपकषायरसास्वादलक्षणाश्चत्वारो विघ्नाः सम्भवन्ति। अखण्डवस्त्वनवलम्बनेन चित्तवृत्तेर्निद्रा "लयः"। ध्येयमगृहीत्वाऽन्यावलम्बनं "कषायः" रागादिना

स्तब्धीभूतचित्तवृत्तेर्ध्येयाऽनवलम्बनं वा "कषायः"। अखण्डवस्त्वनवलम्बेन चित्तवृत्तेः सविकल्पानन्दास्वादनं "रसास्वादः" एतैरहितं चित्तं निवातदीपवदचलं सदखण्डचैतन्यमात्रमवतिष्ठते यदा, तदा निर्विकल्पसमाधिरुच्यते। अन्तःकरणशुद्ध्यर्थमस्यावश्यकत्वम्। "कषाये कर्मभिः पक्वे ततो ज्ञानं प्रजायते" इति ॥ मुक्तिर्नाम, आत्यंतिकदृश्योच्छेदः। "जीवन्मुक्तो" नाम। तत्त्वज्ञाप्रुष्टजन्मान्तरशक्तिकवासनामात्रधृतशरीरत्वम्। "भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः। क्षीयन्ते चास्य कर्माणि तस्मिन्दृष्टे परावरे" इति। अयं तु व्युत्थानसमये शरीरादिना यथाप्राप्तानि कर्माणि फलानि च पश्यन्नपि ज्ञानबाधितत्वात् परमार्थतो न पश्यति "सचक्षुरचक्षुरिव सकर्णोऽकर्ण इव" इत्यादिश्रुतेः। उक्तं च "सुषुप्तवज्जाग्रति यो न पश्यति द्वयं च पश्यन्नपि चाऽद्वयत्वतः। तथापि कुर्वन्नपि निष्क्रियश्च यः स आत्मविन्नान्य इतीह निश्चयः" इति। तदानीममानित्वादीनि अद्वेष्टृतादयो, मैत्री पूज्येषु, करुणा दुःखेषु, मुदिता धर्मिष्ठेषु, उपेक्ष्या दुष्टेषु, इत्याद्याः सद्गुणाश्चालङ्कारवदऽनुवर्त्तन्ते। उक्तं च। "उत्पन्नात्मावबोधस्य ह्यद्वेष्टृतादयो गुणाः। अयत्नतो भवन्त्यस्य नतु साधनरूपिणः" इति। अस्य दर्शनात् पापक्षयो भवति, भजनेन उत्तरोत्तरश्रेयोवृद्धिः, सम्भाषणेन मोक्षो भवति इत्थं लोकस्य त्रिधोपकारो भवति। श्रुतिश्च "अशनाच्छादने स्वशरीरोपभोगाय, लोकोपकारार्थाय च परिगृह्णाति" इति सद्गुरोः प्रसादादेव एवंविधबोधो भवति, नान्यथा। "आचार्यवान्पुरुषो वेद आचार्याद्धै विद्यां विदित्वा तरति शोकमात्मवित्, ॥ तद्विद्धि प्रणिपातेन परिप्रश्नेन सेवया। उपदेक्ष्यन्ति ते ज्ञानं ज्ञानिनस्तत्त्वदर्शिनः" इत्यादि श्रुतिस्मृतिभ्याम् ॥ इदानीमन्यविद्योपासने दोषमाह ॥ किंच। अन्यविद्याः क्रियासारदिशन्ति।

कालान्तरेऽनित्यफलतां दर्शयन्ति ।"सर्वा विद्याः क्रियापराः" यदि क्रियाफलं मोक्षो भवेत्तदाऽनित्यतां प्रसज्येत, घटवत् स्वर्गादि नश्येदिति । तत् "यथा कर्मचितो लोकः क्षीयते, एवममुत्र पुण्यचितो लोकः क्षीयते" इति श्रुतेः । "क्षीणे पुण्ये मर्त्यलोकं विशन्ति" इति स्मृतेश्च । अत "आचरण आयासः, फले स्पर्धा, भोगान्ते पतनम्" । एवमेवान्यविद्योपासने दुःखानुदुःखमाप्नोति । "मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति । योऽन्यदेवतामुपासते, स देवानां पशुः अन्योऽसावन्योऽहमस्मीति उपासते, न स वेद यथा पशुः" इति श्रुतेः । तस्मात् दुःसाध्य मनित्यफलां चान्यविद्यां परित्यज्येमां सुसाध्यां नित्यफलां चाध्यात्मविद्यामाश्रय ॥

"राजविद्या राजगुह्यं पवित्रमिदमुत्तमम् । प्रत्यक्षावगमं धर्म्यं सुसुखं कर्तुमव्ययम्" इति भगवद्वचनात् । किञ्च । अग्निहोत्रादीनां फलं स्वर्गादि यथा तथा ब्रह्मविद्यायाः फलं मुक्तिः, "ब्रह्मविदाप्नोति परम्" इत्यादि श्रुतिर्दर्शयति॥ तथा च त्वङ्मासरुधिरमेदोमज्जात्मकाः षट् कोशाः, जरामरणक्षुत्पिपासाशोकमोहाश्च षट् ऊर्मयः । घृणा लज्जा भयं शङ्का जुगुप्सा कुलं शीलं वृत्तं चाष्टौ पाशाः । "रसो रुधिरमांसमेदोमज्जास्थिरेतांसि" सप्त धातवः । अविद्यास्मितारागद्वेषाभिनिवेशाः पञ्च क्लेशाः । अविद्यामूलाः सर्वे नश्यन्ति॥ ज्ञानस्य सप्त भूमिका उत्तरोत्तरं वृद्धिं यान्ति। ताश्चेमाः। शुभेच्छा, विचारणा, तनुमानसा, सत्त्वापत्तिः, असंसक्तिः, पदार्थाभावनी, तुर्यगा चेति ज्ञानभूमयः । भूमिका नाम, चित्तावस्थाविशेषः। अत्राद्यभूमिकात्रितयं जाग्रदवस्थानामकं ब्रह्मविद्यासाधनमेव, नतु ब्रह्मविद्याकोटयन्तर्वर्ति, भेदसत्यत्वबुद्धेरनिवृत्तत्वात, अत आस्वारूढो मुमुक्षुर्विघ्नैरभिभवति प्रमादात् । चतुर्थीं स्वप्ननाम्नीं प्राप्तः सुप्यमानो "ब्रह्मवित," इत्युच्यते । पञ्चम्यां निर्विकल्पतया तिष्ठन् स्वयमेव व्युत्थायमानो

“ब्रह्मविद्वर” इत्युच्यते। षष्ठ्यां पार्श्वस्थबोधनात् व्युत्थायमानो ब्रह्मविद्वरीयान् । इति एतद्भूमिद्वयं सुषुप्तिरित्युच्यते । सप्तमीं तुर्याख्यां प्राप्ते योगिन्येवाऽसंप्रज्ञातप्रतिपादकानि योगशास्त्राणि पर्यवस्यन्ति, सोऽयं योगी व्युत्थानरहितो निर्विकल्पसमाधिस्थः परमहंसः समस्तभूमौ ब्रह्मविद्वरिष्ठ इति चोच्यते, एतत्रितयारूढो मुक्त एव । जीवः पराद्भिन्नः, इति भ्रमो बिम्बप्रतिबिम्बदृष्टान्तेन निवर्तनीयः । आत्मनि कर्तृत्वादि वास्तवम्, इति स्फटिकलौहित्यदृष्टान्तेन निवर्तनीयम्। शरीरत्रयावच्छिन्नात्माऽसङ्गी, इति घटाकाशदृष्टा० । जगत्कारणत्वेन ब्रह्मणो, ऽविकारित्वमिति रज्जुसर्पदृ० । कारणाद्भिन्नस्य प्रपञ्चस्य सत्यत्वम्, इति सुवर्णकटकदृष्टान्तेन निवर्तनीयमिति वेदानुशासनम् । ॐ अथ शठानाम्, धूर्तानाम-निःश्रद्धानाम्, नास्तिकानाम्, उत्पथगामिनाम्, गुरौव्यभिचारिणाम्, असेवकानाम्, अतपस्कानां साधनहीनानाम् एतां विद्यां न प्रकाशयेत् तेषु निर्वीर्याऽमङ्गलदा भवति । किन्तु “यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ । तस्यैते कथिता ह्यर्थाः प्रकाश्यन्ते महात्मनः ” इति श्रुतेः ॥ भक्तिमतां फलतीति ॥

सह नाववतु सह नौ भुनक्तु, सह वीर्यं करवावहै ।
तेजस्वि नावधीतमस्तु मा विद्विषावहै ॐ शान्तिः शान्तिः ॐ शान्तिः ॥

इति श्रीसंक्षिप्तवेदान्तप्रक्रिया श्रीशंकराचार्यविरचिता अज्ञानबोधिनी समाप्ता ।

श्रीब्रह्मार्पणमस्तु ॥

---

श्रीप्रतीचे गुरवे नमः ।

# अथ आत्मबोधः ।



तपोभिः क्षीणपापानां शान्तानां वीतरागिणाम् ।
मुमुक्षूणामपेक्ष्योऽयमात्मबोधो विधीयते ॥ १ ॥
बोधोऽन्यसाधनेभ्यो हि साक्षान्मोक्षैकसाधनम् ।
पाकस्य वह्निवज्ज्ञानं विना मोक्षो न सिद्ध्यति २
अविरोधितया कर्म नाऽविद्यां विनिवर्तयेत् ।
विद्याऽविद्यां निहन्त्येव तेजस्तिमिरसंघवत्॥३॥
परिच्छिन्न इवाज्ञानात्तन्नाशे सति केवलः ।
स्वयं प्रकाशते ह्यात्मा मेघापायेंऽशुमानिव ॥ ४॥
अज्ञानकलुषं जीवं ज्ञानाभ्यासाद्धि निर्मलम् ।
कृत्वा ज्ञानं स्वयं नश्येज्जलं कतकरेणुवत् ॥ ५ ॥
संसारः स्वप्नतुल्यो हि रागद्वेषादिसंकुलः ।
स्वकाले सत्यवद्भाति प्रबोधे सत्यऽसद्भवेत् ॥६॥
तावत्सत्यं जगद्भाति शुक्तिकारजतं यथा ।
यावन्न ज्ञायते तत्त्वं सर्वाधिष्ठानमद्वयम ॥ ७ ॥

उपादानेऽखिलाधारे जगन्ति परमेश्वरे ।
जन्मस्थितिलयं यान्ति बुद्बुदा इव वारिणि ॥८॥
सच्चिदात्मन्यनुस्यूते नित्ये विष्णौ प्रकल्पिताः ।
व्यक्तयो विविधाः सर्वा हाटके कटकादिवत्॥९॥
यथाकाशो हृषीकेशो नानोपाधिगतो विभुः ।
तद्भेदाद्भिन्नवद्भाति तन्नाशे केवलो भवेत् ॥ १०॥
नानोपाधिवशादेव जातिवर्णाश्रमादयः ।
आत्मन्यारोपितास्तोये रसवर्णादिभेदवत् ॥११॥
पञ्चीकृतमहाभूतसम्भवं कर्म संचितम् ।
शरीरं सुखदुःखानां भोगायतनमुच्यते ॥ १२ ॥
पञ्चप्राणमनोबुद्धिदशेन्द्रियसमन्वितम् ।
अपञ्चीकृतभूतोत्थं सूक्ष्माङ्गं भोगसाधनम् ॥१३॥
अनाद्यविद्याऽनिर्वाच्या कारणोपाधिरुच्यते ।
उपाधित्रितयादन्यमात्मानमवधारयेत् ॥ १४ ॥
पञ्चकोशादियोगेन तत्तन्मय इव स्थितः ।
शुद्धात्मा नीलवस्त्रादियोगेन स्फटिको यथा१५॥
वपुस्तुषादिभिः कोशैर्युक्तं युक्त्याऽवघानतः ।

---

१ शरीरत्रयात्मकतुषादिभिः ।

आत्मानमन्तरं शुद्धं विविच्यात्तण्डुलं यथा ॥१६॥
सदा सर्वगतोऽप्यात्मा न सर्वत्राऽवभासते।
बुद्धावेवावभासेन स्वच्छेषु प्रतिबिम्बवत्॥ १७ ॥
देहेन्द्रियमनोबुद्धिप्रकृतिभ्यो विलक्षणम् ।
तद्वृत्तिसाक्षिणं विद्यादात्मानं राजवत्सदा ॥१८॥
व्यापृतेष्विन्द्रियेष्वात्मा व्यापारीवाविवेकिनाम् ॥
दृश्यतेऽभ्रेषु धावत्सु धावन्निव यथा शशी॥१९॥
आत्मचैतन्यमाश्रित्य देहेन्द्रियमनोधियः।
स्वकीयार्थेषु वर्तन्ते सूर्यालोकं जना इव ॥२०॥
देहेन्द्रियगुणान्कर्माण्यमले सच्चिदात्मनि ।
अध्यस्यन्त्यविवेकेन गगने नीलतादिवत् ॥२१॥
अज्ञानान्मानसोपाधेः कर्तृतादीनि चात्मनि।
कल्प्यन्तेऽम्बुगते चन्द्रे चलनादि यथाऽम्भसः२२
रागेच्छासुखदुःखादि बुद्धौ सत्यां प्रवर्तते।
सुषुप्तौ नास्ति तन्नाशे तस्माद्बुद्धेस्तु नात्मनः २३
प्रकाशोऽर्कस्य तोयस्य शैत्यमग्नेर्यथोष्णता।
स्वभावः सच्चिदानन्दनित्यनिर्मलतात्मनः॥२४॥
आत्मनः सच्चिदंशस्तु बुद्धेर्वृत्तिरिति द्वयम्।

संयोज्य चाविवेकेन जानामीति प्रवर्तते ॥२५॥
आत्मनो विक्रिया नास्ति बुद्धेर्बोधो न जात्विति।
जीवस्तु तत्त्वमज्ञात्वा कर्ता द्रष्टेति मुह्यति ॥२६॥
रज्जुसर्पवदात्मानं जीवं ज्ञात्वा भयं वहेत्।
नाऽहं जीवः परात्मेति ज्ञातश्चेन्निर्भयो भवेत्॥२७॥
आत्माऽवभासयत्येको बुद्ध्यादीनीन्द्रियाणि च।
दीपो घटादिवत्स्वात्मा जडैस्तैर्नाऽवभास्यते॥२८॥
स्वबोधे नान्यबोधेच्छा बोधरूपतयात्मनः।
न दीपस्यान्यदीपेच्छा यथा स्वात्मा प्रकाशते २९॥
निषिद्ध्य निखिलोपाधीन्नेति नेतीति वाक्यतः।
विद्यादैक्यं महावाक्यैर्जीवात्मपरमात्मनोः ॥३०॥
आविद्यकं शरीरादि दृश्यं बुद्बुदवत्क्षरम्।
एतद्विलक्षणं विद्यादहं ब्रह्मेति निर्मलम् ॥ ३१ ॥
देहान्यत्वान्न मे जन्मजराकार्श्यलयादयः।
शब्दादिविषयैः सङ्गो निरिन्द्रियतया नच ॥३२॥
अमनस्त्वान्न मे दुःखं रागद्वेषभयादयः।
अप्राणो ह्यमनाः शुभ्र इत्यादिश्रुतिशासनात्॥३३॥
निर्गुणो निष्क्रियो नित्यो निर्विकल्पो निरञ्जनः।

निर्विकारो निराकारो नित्यमुक्तोऽस्मि निर्मलः॥३४॥
अहमाकाशवत्सर्वबहिरन्तर्गतोऽच्युतः ।
सदा सर्वसमः शुद्धो निःसंगो निर्मलोऽचलः॥३५॥
नित्यशुद्धविमुक्तैकमखण्डानन्दमद्वयम् ।
सत्यं ज्ञानमनन्तं यत्परं ब्रह्माहमेव तत् ॥ ३६ ॥
एवं निरन्तरं कृत्वा ब्रह्मैवास्मीति वासना ।
हरत्यविद्याविक्षेपान्रोगानिव रसायनम् ॥ ३७ ॥
विविक्तदेश आसीनो विरागो विजितेन्द्रियः ।
भावयेदेकमात्मानं तमनन्तमनन्यधीः ॥ ३८ ॥
आत्मन्येवाखिलं विश्वं प्रविलाप्य धिया सुधीः ।
भावयेदेकमात्मानं निर्मलाकाशवत्सदा ॥ ३९ ॥
नामरूपादिकं सर्वं विहाय परमार्थवित् ।
परिपूर्णचिदानन्दस्वरूपेणावतिष्ठते ॥ ४० ॥
ज्ञातृज्ञानज्ञेयभेदः परात्मनि न विद्यते ।
परानन्दैकरूपत्वाद्दीप्यते स्वयमेव तत् ॥ ४१ ॥
एवमात्मारणौ ध्यानमथने सततं कृते ।
उत्थिताऽवगतिज्वाला सर्वाज्ञानेन्धनं दहेत्॥४२॥
अरुणेनेव बोधेन पूर्वं सन्तमसे हृते ।

तत आविर्भवेदात्मा स्वयमेवांशुमानिव ॥४३॥
आत्मा तु सततं प्राप्तोऽप्यप्राप्तवदविद्यया ।
तन्नाशे प्राप्तवद्भाति स्वकण्ठाभरणं यथा ॥ ४४ ॥
स्थाणौ पुरुषवद्भ्रान्त्या कृता ब्रह्मणि जीवता ।
जीवस्य तात्त्विके रूपे तस्मिन्दृष्टे निवर्तते ॥४५॥
तत्त्वस्वरूपानुभवादुत्पन्नं ज्ञानमञ्जसा ।
अहं ममेति चाज्ञानं बाधते दिग्भ्रमादिवत् ॥४६॥
सम्यग्विज्ञानवान्योगी स्वात्मन्येवाखिलं स्थितम् ।
एकं च सर्वमात्मानमीक्ष्यते ज्ञानचक्षुषा ॥ ४७ ॥
आत्मैवेदं जगत्सर्वमात्मनोऽन्यन्न किंचन ।
मृदो यद्वद्घटादीनि स्वात्मानं सर्वमीक्ष्यते॥ ४८ ॥
जीवन्मुक्तस्तु तद्विद्वान्पूर्वोपाधिगुणांस्त्यजेत् ।
सच्चिदानन्दरूपत्वाद्भवेद्भ्रमरकीटवत् ॥ ४९ ॥
तीर्त्वा मोहार्णवं हत्वा रागद्वेषादिराक्षसान् ।
योगी शान्तिसमायुक्तः स्वात्मारामो विराजते५०॥
बाह्यानित्यसुखासक्तिं हित्वात्मसुखनिर्वृतः ।
घटस्थदीपवत्स्वच्छ अन्तरेव प्रकाशते ॥ ५१ ॥

उपाधिस्थोऽपि तद्धर्मैरलिप्तो व्योमवन्मुनिः।
सर्वविन्मूढवत्तिष्ठेदसक्तो वायुवच्चरेत् ॥ ५२ ॥
उपाधिविलयाद्विष्णौ निर्विशेषं विशेन्मुनिः।
जले जलं वियद्व्योम्नि तेजस्तेजसि वा यथा॥५३॥
यल्लाभान्नापरो लाभो यत्सुखान्नापरं सुखम्।
यज्ज्ञानान्नापरं ज्ञानं तद्ब्रह्मेत्यवधारयेत् ॥ ५४ ॥
यद्दृष्ट्वा नापरं दृश्यं यद्भूत्वा न पुनर्भवः।
यज्ज्ञात्वा नापरं ज्ञेयं तद्ब्रह्मेत्यवधारयेत् ॥ ५५॥
तिर्यगूर्ध्वमधः पूर्णं सच्चिदानन्दमद्वयम्।
अनन्तं नित्यमेकं च तद्ब्रह्मेत्यवधारयेत् ॥ ५६ ॥
अतद्व्यावृत्तिरूपेण वेदान्तैर्लक्ष्यतेऽद्वयम्।
अखण्डानन्दमेकं यत्तद्ब्रह्मेत्यवधारयेत् ॥ ५७ ॥
अखण्डाऽनन्दरूपस्य तस्यानन्दलवाश्रिताः।
ब्रह्माद्यास्तारतम्येन भवन्त्यानन्दिनोऽखिलाः ५८॥
तद्युक्तमखिलं वस्तु व्यवहारस्तदन्वितः।
तस्मात्सर्वगतं ब्रह्म क्षीरे सर्पिरिवाखिले ॥ ५९ ॥
अनण्वस्थूलमह्रस्वमदीर्घमजमव्ययम्।
अरूपगुणवर्णाख्यं तद्ब्रह्मेत्यवधारयेत् ॥ ६० ॥

यद्भासा भास्यतेऽर्कादि भास्यैर्यत्तु न भास्यते ।
येन सर्वमिदं भाति तद्ब्रह्मेत्यवधारयेत् ॥ ६१॥
स्वयमन्तर्बहिर्व्याप्य भासयत्यखिलं जगत् ।
ब्रह्म प्रकाशते वह्निप्रतप्तायसपिण्डवत् ॥ ६२ ॥
दृश्यते श्रूयते यद्यद्ब्रह्मणोऽन्यन्न किंचन ।
ब्रह्मान्यद्भाति चेन्मिथ्या यथा मरुमरीचिका॥६३॥
सर्वगं सच्चिदानन्दं ज्ञानचक्षुर्निरीक्षते ।
अज्ञानचक्षुर्नेक्षेत भास्वन्तं भानुमन्धवत् ॥ ६४ ॥
श्रवणादिभिरुद्दीप्तो ज्ञानाग्निपरितापितः ।
जीवः सर्वमलान्मुक्तः स्वर्णवद्द्योतते स्वयम्॥६५॥
हृदाकाशोदितो ह्यात्मबोधभानुस्तमोऽपहृत् ।
सर्वव्यापी सर्वधारी भाति सर्वं प्रकाशयन् ॥६६॥

दिग्देशकालाद्यनपेक्ष्य सर्वगं
शीतादिहृन्नित्यसुखं निरञ्जनम् ।
यः स्वात्मतीर्थं भजते विनिष्क्रियः
स सर्ववित्सर्वगतोऽमृतो भवेत् ॥ ६७ ॥

" इति श्रीशंकराचार्यकृतमात्मबोधप्रकरणं समाप्तम् ।

# प्रह्लादस्तुतिः ।



स्वस्मिन्निव समस्तेषु तत्कृपामृतदृष्टये । प्रह्लादः स्तौति सत्पद्यैर्द्विचत्वारिंशता हरिम् ॥१॥ तत्र तावदात्मनो भगवत्स्तुतावनधिकारमित्राशंक्याधिकारं सम्भावयन्नाह—ब्रह्मादय इति पञ्चभिः ।

प्रह्लाद उवाच ।

**ब्रह्मादयः सुरगणा मुनयो[1]ऽथ सिद्धाः[2] सत्त्वैकतानम[3]तयो वचसां प्रवाहैः । नाराधितुं पुरु[4]गुणैरधुनापि पिप्रुः[5] किं तोष्टुमर्हति स मे हरिरुग्रजातेः[6] ॥ १ ॥**

१ मननशीलाः । २ ज्ञानिनः । ३ सत्त्व एवैकस्मिंस्तानो विस्तारो यस्याः सा मतिर्येषां तथाविधा अपि । ४ बहुभिर्वक्ष्यमाणैर्गुणैरपि यमाराधयितुं ५ शक्ताः ६ उग्रा घोरा आसुरी जातिर्यस्य ॥ १ ॥

एवं हरितोषणे स्वस्यायोग्यतामाशंक्य योग्यतां सम्भावयति—मन्ये इति द्वाभ्याम् ।

**मन्ये धनाभिजन[1]रूप[2]तपःश्रुत[3]ओज[4]स्तेजः[5]प्रभाव[6]बलपौरुष[7]बुद्धियोगाः[8] । नाराधनाय हि[9] भवन्ति परस्य पुंसो भक्त्या[10] तुतोष[11] भगवान्गजयूथपाय ॥ २ ॥**

१ सत्कुले जन्म २ सौन्दर्यम् । ३ पाण्डित्यम् । ४ इन्द्रियनैपुण्यम् । ५ कांतिः । ६ प्रतापः । ७ उद्यमः । ८ अष्टाङ्गः । एते धनादयो द्वादशापि गुणाः परस्य पुंसः

आराधनाय न भवन्ति । ९ यस्मात् । १० केवलयैव भक्त्या । ११ तुष्टोऽभूत् ॥ २ ॥

एवं भक्त्यैव केवलया हरेस्तोषः सम्भवतीत्युक्तमिदानीं भक्तिं विना नान्यत्किंचित्तत्तोषहेतुरित्याह—विप्रादिति ।

**विप्राद्द्विषड्गुणयुतादरविन्दनाभपादारविन्दविमुखाच्छ्वपचं वरिष्ठम् । मन्ये तदर्पितमनोवचनेहितार्थप्राणं पुनाति स कुलं न तु भूरिमानः ॥ ३ ॥**

१ पूर्वोक्ता धनादयो द्वादश गुणास्तैर्युक्ताद्विप्रादपि श्वपचं वरिष्ठं मन्ये यद्वा सनत्सुजातोक्ता द्वादश धमार्दयो गुणा द्रष्टव्याः । तदुक्तम्—'धर्मश्च सत्यं च दमस्तपश्च अमात्सर्यं ह्रीस्तितिक्षाऽनसूया । यज्ञश्च धर्मश्च धृतिः श्रुतं च व्रतानि वै द्वादश ब्राह्मणस्य ॥' इति । यद्वा 'शमोदमस्तपः—शौचं क्षान्त्यार्जवविरक्तताः । ज्ञानविज्ञानसन्तोषः सत्यास्तिक्ये द्विषड्गुणाः'॥ इति । २ कर्म । ३ वरिष्ठत्वे हेतुः । श्वपचः सर्वं कुलं पुनाति । ४ भूरिगर्वो विप्र आत्मानमपि न पुनाति । कुतः कुलम् । यतो भक्तिहीनस्यैते गुणा गर्वायैव भवन्ति नतु शुद्धयेऽतो हीन इति भावः ॥३॥

तर्हि किं धनाद्यर्पणेन सम्मानं प्राकृत इव भगवानपेक्षते नेत्याह—नैवेति ।

**नैवात्मनः प्रभुरयं निजलाभपूर्णो मानं जनादविदुषः करुणो वृणीते । यद्यज्जनो भगवते विदधीत मानं तच्चात्मने प्रतिमुखस्य यथा मुखश्रीः ॥४॥**

१ आत्मनोऽर्थे । २ पूजाम् । ३ अल्पकाज्जनात् । ४ इच्छति यतो निजला-

भेनैव पूर्णः। ५ तर्हि पूजां नेच्छत्येव । तत्राह—कृपालुरतो वृणीते च । ६ तत्र हेतुः यद्यदिति । यं यं मानं यद्वा यस्मात् येन धनादिना भगवते मानं विदधीत तदेवात्मने भवति नान्यत् । ७ यथा मुखे कृतैव तिलकादिशोभा प्रतिबिम्बस्य भवति नतु साक्षात्तस्यैव कर्तुं शक्यते तद्वत् ॥ ४ ॥

**तस्मादहं विगतविक्लव ईश्वरस्य सर्वात्मना महि गृणामि यथामनीषम् । नीचोऽजया गुणविसर्गमनुप्रविष्टः पूयेत येन हि पुमाननुवर्णितेन ॥ ५ ॥**

१ यस्मादेवं भगवान्भक्त्यैव तुष्यति तस्मादहं नीचोऽपि । २ गतशंकः सन् । ३ महिमानम् । ४ सर्वप्रयत्नेन । ५ स्वमनीषानुसारेण । ६ अनुवर्णयामि । ७ अजानतोऽपि स्तुतिकरणे हेतुमाह । येनैव महिम्नाऽनुवर्णितेन । ८ अविद्यया । ९ संसारम् । १० शुद्ध्येत । तन्महि । अन्यस्य तथा शोधकत्वाभावादित्यर्थः ॥ ५ ॥

तदेवमात्मनः स्तुतावनधिकारं परिहृत्येदानीं तं स्तुवन्कोपोपसंहारं प्रार्थयते—सर्वे हीति द्वाभ्याम् ।

**सर्वे ह्यमी विधिकरास्तव सत्त्वधाम्नो ब्रह्मादयो वयमिवेश नचोद्विजन्तः । क्षेमाय भूतय उतात्मसुखाय चास्य विक्रीडितं भगवतो रुचिरावतारैः ६॥**

१ बिभ्यतः । २ सत्त्वमूर्तेस्तव । ३ त्वन्नियोगकर्तारो भक्ता एव नान्ये । ४ नच असुरा इव वैरभावेनैते भक्ताः किन्तु श्रद्धयैव । ५ तवावतारैरस्य जगतो विविधं क्रीडितं क्षेमादिप्रयोजनाय नतु भयोत्पादनाय ॥ ६ ॥

त[1]द्यच्छ मन्युमसु[2]रश्च हतस्त्वयाऽद्य मोदे[3]त साधु-रपि वृश्चिकसर्पहत्या । लो[4]काश्च निर्वृतिमिताः [5]प्रतियन्ति सर्वे रूपं नृसिंह वि[6]भयाय जनाः स्मरन्ति ॥ ७ ॥

१ तस्मादेशं भयपरिहाराय मन्युमुपसंहर । २ यदर्थमयं मन्युः सचासुरः साधूनां सन्तोषणार्थमद्य हतः । अतः परं क्रोधेन कार्याभावात्तं नियच्छ। ३ नन्वन्येषां वधेन साधुः किं मोदेत तत्राह—वृश्चिकादेः परोपद्रवकारिणोऽन्यतो जातया हत्या वधेन तस्यैव तद्भद्रं जातमिति साधुरपि मोदेतैव। ४ तर्हि बहूनां सुखावहत्वादमुं क्रोधं न त्यजामीति चेत्तत्राह-लोकाश्च निर्वृतिं प्राप्ताः सन्तः।५क्रोधोपसंहारं प्रतीक्षन्ते। ६ तर्हि जनानां पुनर्भयाभावाय मन्युं धारयामीति चेत्तत्राह—रूपं भयनिवृत्यै । एतद्रूपस्मरणादेव भयनिवृत्तेर्न मन्युधारणेन कृत्यमस्तीत्यर्थः ॥ ७ ॥

त्वं चेद्बिभेषि तर्हि त्यजामीति चेत्तत्राह—नाहमिति ।

नाहं बिभेम्यजित ते[1]ऽतिभ[2]यानकास्यजिह्वार्कने-त्रभ्रुकुटीरभसोग्रदंष्ट्रात् । अं[3]त्रस्रजः क्ष[4]तजकेसरशं-कुकर्णान्निर्ह्रादभीतदिगिभादरिभिन्नखाग्रात् ॥ ८ ॥

१ तेऽस्माद्रूपादहं न बिभेमि । २ आस्यं च जिह्वा चार्कसदृशानि नेत्राणि च भ्रुकुटीनां रभस आटोपश्चोग्रा दंष्ट्राश्चैतान्यतिभयानकानि यस्मिंस्तस्मात्। ३ अन्त्रमय्यःस्रजो यस्मिन्। ४ क्षतजाक्ताःकेसराःशंकुवदुन्नतौ कर्णौ च यस्मिन्। ८।

महद्भयं त्वन्यदस्तीत्याह—त्रस्तोऽस्मीति ।

त्रस्तोऽस्म्यहं कृपणवत्सल दुःसहोग्रसंसारचक्रकद-
नाद्ग्रसतां प्रणीतः । बद्धः स्वकर्मभिरुशत्तम
तेऽङ्घ्रिमूलं प्रीतोऽपवर्गमरणं ह्वयसे कदा नु ॥९॥

१ दुःसहं यदुग्रं संसारचक्रे दुःखं तस्मात् । २ तत्र च हिंस्राणामिन्द्रियात्मकानां मध्ये स्वकर्मभिर्बद्धः सन् । ३ प्रक्षिप्तोऽस्मि । ४ अपवर्गभूतम् । ५ रक्षकं चरणं प्रति कदानु मामाह्वयसे ॥ ९ ॥

दास्ये सति मत्प्रीतिरिति चेत्तर्हि नानायोनिषु क्लिश्यमानस्य मम दास्यज्ञानाभावात्त्वमेव तदुपदिशेति प्रार्थयते—यस्मादिति ।

यस्मात्प्रियाप्रियवियोगसयोगजन्मशोकाग्निना स-
कलयोनिषु दह्यमानः । दुःखौषधं तदपि दुःखम-
तद्धियाऽहं भूमन्भ्रमामि वद मे तव दास्ययोगम् १०

१ इष्टवियोगानिष्टयोगोत्पन्नदुःखाग्निना । २ अस्मि । ३ दुःखस्य प्रतीकारः कार्य इति चेत्तत्राह—दुःखप्रतीकारोऽपि दुःखमेव । ४ एवमपि देहाद्यभिमानेन मुह्यामि । ५ अतो स्वीयदास्यात्मकं निस्तारोपायं वद ॥१०॥

ननु दास्ययोगेन प्रवृत्तस्यापि तदन्तरायभूतानां पूर्वोक्तनानादुःखानां कुतः परिहारस्तत्राह—सोऽहमिति ।

सोऽहं प्रियस्य सुहृदः परदेवताया लीलाकथास्त-
व नृसिंह विरिञ्चिगीताः । अञ्जस्तितर्म्यनुगृणन्गुण-
विप्रमुक्तो दुःखानि ते पदयुगालयहंससङ्गः ॥११॥

१ त्वदासः सन् । २ तव लीलाकथाः गृणन् महादुःखानि । ३ सुखेन तरामि न गणयामीत्यर्थः । ४ तत्र हेतुः रागादिभिर्विशेषेण प्रमुक्तः सन् । ५ त्वत्कृतस्ते पदयुगमेवालयो येषां भक्तानां त एव हंसा ज्ञानिनस्तैः संगो यस्य

मम सोऽहम् । ६ तत्संप्रदायप्रवृत्ताः । तथा चाथर्वणी श्रुतिः । "देवा ह वै प्रजापतिमब्रुवन्" इत्यादि । दासे प्रवृत्तस्य भवदनुग्रहेण सत्संगस्ततो वीतरागतया भगवद्गुणानुवर्णनं ततश्च न दुःखाभिभवः स्यादिति वाक्यार्थः॥ ११॥

ननु दुःखैस्तप्तस्य तत्प्रतीकारो लोके प्रसिद्ध एव किं मदास्यादिना तत्राह—बालस्येति ।

**बालस्य नेह शरणं पितरौ नृसिंह नार्तस्य चागदमुदन्वति मज्जतो नौः । तप्तस्य तत्प्रतिविधिर्य इहाञ्जसेष्टस्तावद्विभो तनुभृतां त्वदुपेक्षितानाम् १२**

हे नृसिंह तप्तस्य दुःखप्रतीकार इह लोके योऽञ्जसेष्टः स त्वयोपेक्षितानां तावदेव क्षणमात्रमेव नत्वात्यन्तिकः । तदेवाह-बालस्य पितरौ रक्षकाविह न भवतः ताभ्यां पाल्यमानस्यापि तस्य दुःखदर्शनात् । क्वचिदजीगर्तादिषु ताभ्यामेव तद्वधदर्शनाच्च । रोगिणो नचौषधं रक्षकम् । कृतेऽप्यौषधे मृत्युदर्शनात् । समुद्रे मज्जतो नौः पालयित्री नास्ति । तया सह मज्जनदर्शनात् । अतस्त्वमेव शरणमित्यर्थः ॥ १२ ॥

ननु काचित्कुतश्चित्केनचित्कदाचित्कश्चिद्रक्षकोऽपि दृश्यत एवेत्याशंक्य तत्रापि तत्तद्रूपेण त्वमेव रक्षक इत्युररीकृत्य तस्यैव सर्वात्मतामाह—यस्मिन्निति ।

**यस्मिन्[1] यतो[2] यर्हि[3] येन[4] च यस्य[5] यस्माद्[6] यस्मै[7] यथा[8] यदुत[9] यस्त्वपरः[10] परो[11] वा । भावः[12] करोति[13] विकरोति[14] पृथक्स्वभावः[15] सञ्चोदितस्तदखिलं भवतः स्वरूपम् ॥ १३ ॥**

१ अधिकरणे । २ निमित्तात् । ३ काले । ४ करणेन । ५ सम्बन्धि ।

६ उपादानात्। ७ सम्प्रदानाय। ८ प्रकारेण। ९ ईप्सिततमम्। १० अर्वाचीनः पित्रादिः ११ ब्रह्मादिर्वा। १२ कर्ता तत्तत्कारकैर्यद्यत्करोति विकरोति वा सत्सत्र भवतः स्वरूपं न तु पृथक्। १३ उत्पादयति। १४ रूपान्तरं नयति। १५ सत्त्वादिप्रकृतिः ॥१३॥

अतोऽन्यस्य रक्षकस्याभावादसंसारित्वाच्च नित्यमुक्तस्त्वमेव मां शरणागतं रक्षेति प्रार्थयते—मायेति द्वाभ्याम्।

**माया मनः सृजति कर्ममयं बलीयः कालेन चोदितगुणाऽनुमतेन पुंसः। छन्दोमयं यदजयार्पितषोडशारं संसारचक्रमज कोऽतितरेत्त्वदन्यः॥१४**

१ मनःप्रधानं लिङ्गम्। २ कुर्वद्रूपम्। ३ दुर्जयम्। ४ क्षोभितगुणा। ५ ईक्षणरूपेणानुग्रहेण। ६ त्वदंशस्य जीवस्य। ७ अविद्यया। ८ तद्भोगार्थमर्पिताः षोडशविकाराख्या यस्मिन्। ९ संसारचक्रात्मकं मनः कोऽतितरेत्। १० त्वत्तः पृथक् स्थितः। त्वामभजन्नित्यर्थः ॥१४॥

ननु ममापि मायासम्बन्धात्कर्तृत्वाद्यविशेषाच्च त्वत्तः को विशेष इत्याह—स इति।

**स त्वं हि नित्यविजितात्मगुणः स्वधाम्ना कालो वशीकृतविसृज्यविसर्गशक्तिः। चक्रे विसृष्टमजयेश्वरषोडशारे निष्पीड्यमानमुपकर्ष विभो प्रपन्नम् ॥१५॥**

१ नित्यं जिता बुद्धेर्गुणा रागादयो येन सः। २ चिच्छक्त्या। ३ यतो मायाप्रेरकः। ४ अतएव स्वाधीनीकृताः कार्याणां कारणानां च शक्तयो येन। ५ अत इक्षुदण्डवन्निष्पीड्यमानं मां ६ स्वसमीपं नय॥ १५॥

ननु लोकपालानां भोगान्भुङ्क्ष्व पित्र्यं वा राज्यमिदं दास्यामि। किमिति संसारादुद्विजसे तत्राह—दृष्टा इति त्रिभिः।

दृष्टा मया दिवि विभोऽखिलधिष्ण्यपानामायुः श्रियो विभव इच्छति याञ्जनोऽयम्। येऽस्मत्पितुः कुपितहासविजृम्भितभ्रविस्फूर्जितेन लुलिताः स तु ते निरस्तः॥ १६॥

१ सम्पदः। २ उद्भवः। आयुरादयो दृष्टा इति काक्वा तुच्छत्वमुक्तम्। ३ तदेवाह। येऽस्मत्पितुः कोपहासविकृतभ्रूभङ्गमात्रेण विध्वस्ताः स च त्वया निरस्तः॥ १६॥

तस्मादमूस्तनुभृतामहमाशिषोज्ञ आयुः श्रियं विभवमैन्द्रियमाविरिञ्चात्। नेच्छमि ते विलुलितानुरुविक्रमेण कालात्मनोपनय मां निजभृत्यपार्श्वम्॥ १७॥

१ यस्मादेवं तस्मात्। २ भोगान् ज्ञस्तत्परिपाकं विद्वान्। ३ इन्द्रियैर्भोग्यम्। ४ ब्रह्मणो भोगमभिव्याप्य। ५ विध्वस्तान् अणिमादीनपि॥१७॥

किञ्च वर्तमानकाले च न भोगार्हा इत्याह—कुत्रेति।

कुत्राशिषः श्रुतिसुखा मृगतृष्णिरूपाः क्वेदं कलेवरमशेषरुजां विरोहः। निर्विद्यते नतु जनो यदपीति विद्वान्कामानलं मधुलवैः शमयन्दुरापैः॥ १८॥

१ श्रवणमेव सुखं यासु ताः। २ मृगतृष्णिकावन्मिथ्याभूताश्चाशिषः क्व।

३ अशेषाणां रोगाणामुद्भवस्थानं क चेदं शरीरम् । ४ एवं चेत्सर्वोऽपि जनः किं न विरज्यते तत्राह—यद्यपीत्येवं विद्वानयं जनस्तथापि न । ५ विरक्तो भवति । ६ कुतः काम एवानलस्तं मधुतुल्यैर्दुःसाध्यैरपि विषयसुखैः शमयन् कामाग्निशमनव्यग्रस्य निर्वेदावकाशो नास्तीत्यर्थः ॥ यद्वाऽचिन्त्यमिदं तव मायाविचेष्टितमिति भावः ॥ १८ ॥

तर्हि त्वं कथं निर्विण्णोऽसि, अन्ये ऽपि मयि प्रवृत्तया त्वत्कृपयैवेत्याशयेनाह—काहमिति ।

**क्वाहं रजःप्रभव ईश तमोधिकेऽस्मिञ्जातः सुरेतरकुले क्व तवानुकम्पा । न ब्रह्मणो ननु भवस्य न वै रमाया यन्मेऽर्पितः शिरसि पद्मकरः प्रसादः ॥ १९ ॥**

१ तामेवाह । ब्रह्मादीनां शिरसि यो नैवार्पितः । ययानुकम्पया । २ स पद्मवत्सकलसन्तापहरः करः । ३ पुरुषार्थरूपो मे शिरस्यर्पित इति ॥ १९ ॥

न च त्वयीदमतिचित्रमित्याह—नैषेति ।

**नैषा परावरमतिर्भवतो ननु स्याज्जन्तोर्यथात्मसुहृदो जगतस्तथापि । संसेवया सुरतरोरिव ते प्रसादः सेवानुरूपमुदयो न परावरत्वम् ॥ २० ॥**

१ एते ब्रह्मादय उत्तमा अयमसुरो नीच इत्येषा परावरमतिः । २ प्राकृतस्य यथा भवति तथा नैव स्यात् । ३ अत्र हेतुः जगत आत्मनः सुहृदश्च । ४ तर्हि सर्वत्र मत्प्रसाद एकरूपश्च किं न स्यात्तत्राह— सेवया तव प्रसादो

भवति। ५ तत्तदिच्छानुसारेण धर्मादीनामुदयो भवति। ६ एवं सत्यपि वैषम्याभावे दृष्टान्तः। सुरतरुर्यथा सेवकस्यैव संकल्पानुसारेण फलं ददाति न चविषमस्तद्वत्। ७ अत्र कारणमिति शेषः॥

एतच्च त्वद्भृत्यकृपया मया प्राप्तमिति त्वद्भृत्यपार्श्वमेव मां नयेत्याशयेनाह—एवमिति।

**एवं जनं निपतितं प्रभवाहिकूपे कामाभिकाममनु यः प्रपतन्प्रसङ्गात्। कृत्वात्मसात्सुरर्षिणा भगवन्गृहीतः सोहं कथं नु विसृजे तव भृत्यसेवाम्॥ २१॥**

यथा त्वयानुगृहीतोऽस्म्यवं नारदेनात्मसात्कृत्वा पूर्वमनुगृहीतः सोऽहं कथं नु त्वद्भृत्यसेवां विसृजामि। कथंभूतोऽनुगृहीतोऽस्मि। प्रभव एवाहियुक्तः कूपस्तस्मिन्कामानभितः कामयमानं जनं निपतितमनु तत्प्रसङ्गात्प्रपतन्योऽहम्। तदेवं त्वद्भृत्यस्य नारदस्यानुग्रहेण त्वयाऽत्यन्तमनुकम्पितोऽस्मि। अयमेव परमोऽनुग्रहो न पुनरिदमतितुच्छं मत्प्राणरक्षणादि॥ २१॥

नचेदं त्वया मदनुग्रहार्थं कृतं किन्त्वन्यार्थमित्याह—मदिति।

**मत्प्राणरक्षणमनन्त! पितुर्वधश्च मन्ये स्वभृत्यऋषिवाक्यमृतं विधातुम्। खड्गं प्रगृह्य यदवोचदसद्विधित्सुस्त्वामीश्वरो मदपरोऽवतु कं हरामि॥ २२॥**

यदेतन्मत्प्राणरक्षणम्। मां हन्तुमुद्यतस्य मत्पितुर्वधश्च तदुभयं स्वभृत्यनारदवाक्यं सत्यं विधातुं कृतमित्यहं मन्ये। कुतः यस्मादसदयुक्तं विधि-

त्सुः खड्गं प्रगृह्यावोचत् किम् । मद्व्यतिरिक्तश्चेदीश्वरोऽस्ति तर्हि त्वामिदानीमवतु । तव कं शिरोऽहं हरामीति ॥ २२ ॥

नचेदं पक्षपातेन रक्षणं दैत्यहननं च त्वयि स्वाभाविकं किन्तु मायागुणोपाधिकम्, सर्वात्मके त्वयि स्वतस्तदयोगादित्याह—एक इति ।

**एकस्त्वमेव जगदेतदमुष्य यत्त्वमाद्यन्तयोः पृथगवस्यसि मध्यतश्च । सृष्ट्वा गुणव्यतिकरं निजमाययेदं नानेव तैरवसितस्तदनुप्रविष्टः ॥ २३ ॥**

एतच्च जगत्त्वमेवैकः । यतोऽमुष्यादावन्ते च पृथगवस्यसि विरामं करोषि सन्मात्रतया कारणत्वेनावधित्वेन च वर्तस इत्यर्थः ॥ अतो मध्यतश्च त्वमेव । कुतस्तर्हि भेदप्रतीतिस्तत्राह—निजमायया गुणपरिणामात्मकमिदं जगत्सृष्ट्वा तदनुप्रविष्टस्त्वं तैर्गुणैर्हेतुभूतैर्नानेव रक्षक इव हन्तेव चावसितः प्रतीतः ॥ २३ ॥

ननु यद्येतज्जगदहमेव तर्हि जगतो वैषम्येन मम वैषम्यमपि किं न स्यादित्यत आह—त्वमिति ।

**त्वं वा इदं सदसदीश भवांस्ततोऽन्यो माया यदात्मपरबुद्धिरियं ह्यपार्था । यद्यस्य जन्म निधनं स्थितिरीक्षणं च तद्वै तदेव वसुकालवदष्टितर्वोः ॥ २४ ॥**

त्वं वै त्वमेवेदं कार्यकारणात्मकं जगन्नतु त्वत्तः पृथक् । भवांस्तु ततोऽन्यः आद्यन्तयोः पृथगवस्थानात् । यद्यस्मादेवमतोऽयमात्मीयोऽयं पर इति या बुद्धिः साऽपार्था मायैव । कार्यकारणाभेदं दृष्टान्तेन साधयति ।

यद्यतो यस्य जन्म ईक्षणं प्रकाशश्च यस्मिन्निधनं च स्थितिश्च तद्वै तदेव। अष्टिर्बीजं कारणम्। तरुः कार्यं तयोर्यथा वसुकालमात्रत्वम्। अयमर्थः। कालशब्देन नीलत्वाद्यसाधारणगुणयोगात्पृथ्वी। वसुशब्देन वस्तुमात्रं भूतसूक्ष्मम्। तत्र तरोर्यथा पृथ्वीमयबीजमात्रत्वं तस्य च यथा भूतसूक्ष्ममात्रत्वमेवं सर्वमपि कार्यकारणात्मकं जगत्परमकारणात्मकमेवेति॥ "वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम्" इति श्रुतिः॥ २४॥

तत्र तावदन्ते पृथगवस्थानं दर्शयति—न्यस्येदमिति।

**न्यस्येदमात्मनि जगद्विलयाम्बुमध्ये शेषेऽत्मना निजसुखानुभवो निरीहः। योगेन मीलितदृगात्मनिपीतनिद्रस्तुर्ये स्थितो नतु तमो न गुणांश्च युंक्षे॥ २५॥**

इदं जगदात्मनैवात्मनि निक्षिप्य स्वसुखमेवानुभवन्निष्क्रियः सन्प्रलयोदकमध्ये शयनं करोषि। तर्हि किं जीवस्येव ममापि तमोवृत्तिरूपा निद्रास्ति, नहि नहि योग एव तु बहिर्वृत्त्यभावसाम्यान्निद्रोच्यते इत्याह। योगेन मीलिते दृशौ येन आत्मना स्वरूपप्रकाशेन निपीता निद्रा येन। यतस्तुर्येऽवस्थात्रयातीते स्वरूपे स्थितस्त्वं नतु सुप्त इवात्मना तमो योजयसि न पश्यसि जाग्रत्स्वप्नयोरिव गुणान्विषयांश्चेत्यर्थः॥ २५॥

इदानीं कारणत्वेनादावपि पृथगवस्थानं दर्शयन्मध्यतश्च त्वमेवेत्येतत्प्रपञ्चयति चतुर्भिः—तस्येति।

तस्यैव ते वपुरिदं निजकालशक्त्या सञ्चोदितप्रकृतिधर्मण आत्मगूढम् । अम्भस्यनन्तशयनाद्विरमत्समाधेर्नाभेरभूत्स्वकणिकावटवन्महाब्जम् ॥ २६ ॥

यस्त्वमम्भसि शेषे तस्यैव ते इदं जगत्स्वरूपं नान्यस्य यतस्त्वं मध्यतोऽपि । तस्य कथंभूतस्य निजया कालशक्त्या संचोदिताः प्रकृतेः सत्त्वादयो येन । स्वरूपत्वे हेतुः । शेषपर्यङ्काद्विरमत्समाधिर्यस्य तस्य नाभेः सकाशात् । एकार्णवोदके महाब्जं लोकपद्ममभूत् । आत्मनि त्वय्येव गूढं सत् स्वकणिकातः सूक्ष्माद्वटबीजान्महावट इव ॥ २६ ॥

तदेवं कारणत्वेनानुगतः सन्मध्यतश्च त्वमेव वर्तस इत्युक्तम् । एतदेव शुद्धसत्त्वस्य ब्रह्मणोऽनुभवेन स्फुटयितुं तस्य प्राक्तनीमवस्थामाह—तदिति ।

तत्सम्भवः[१] कविरतो[२]ऽन्यदपश्यमानस्त्वां बीजमात्मनि[३] ततं स्वबहिर्विचिन्त्य । नाविन्ददब्दशतमप्सु निमज्जमानो जातेऽङ्कुरे कथमुहोपलभेत बीजम् ॥ २७ ॥

१ अब्जाज्जातः । २ ब्रह्मा । ३ पद्मात् । ४ उपादानकारणभूतम् । ५ स्वस्मिन् । ६ व्याप्तं सन्तमपि नाविन्दत् । ७ युक्तं चैतत् । उह अहो अङ्कुरे जाते सति बीजं तदनुगतं कारणं पृथक्कथं नाम पुमान्पश्येत् ॥२७॥

भवदुपासनया तु स्वस्मिन्नेव दृष्टवानित्याह—स त्विति ।

स त्वात्मयोनिरतिविस्मित आस्थितोऽब्जं कालेन तीव्रतपसा परिशुद्धभावः । त्वामात्मनीश भुवि गन्धमिवातिसूक्ष्मं भूतेन्द्रियाशयमये विततं ददर्श ॥ २८ ॥

१ परावृत्याब्जमास्थितः सन् । २ ध्यानेन । अनेन सन्मात्ररूपेणोपादानतया दर्शनमुक्तम् ॥ २८ ॥

ईश्वरत्वेन च दृष्टा कृतार्थोऽभवदित्याह—एवमिति ॥

एवं सहस्रवदनाङ्घ्रिशिरःकरोरुनासास्यकर्णनयनाभरणायुधाढ्यम् । मायामयं सदुपलक्षितसन्निवेशं दृष्ट्वा महापुरुषमाप मुदं विरिञ्चः॥२९॥

१ अनेन प्रकारेण २ अपरिमितानि यानि वदनादीनि तैः ३ समृद्धम् । ४ मायाप्रधानम् । ५ सता प्रपञ्चेनोपलक्षितः सन्निवेशः पादादिरचना यस्य ॥ २९ ॥

तदा च भवांस्तस्यानुग्रहं कृतवानित्याह—तस्मा इति ।

तस्मै भवान्हयशिरस्तनवं च बिभ्रद्वेदद्रुहावतिबलौ मधुकैटभाख्यौ । हत्वाऽनयच्छ्रुतिगणांस्तु रजस्तमश्च सत्त्वं तव प्रियतमां तनुमामनन्ति॥३०॥

हयग्रीवमूर्तिं बिभ्रत्सन् । रजस्तमोरूपौ मधुकैटभाख्यौ हत्वा तस्मै श्रुतिगणान्समर्पितवान् । तत्र हेतुः सत्त्वमिति ॥ ३० ॥

एकस्त्वमेवेत्यादिभिरष्टभिः श्लोकैर्यदुक्तं पक्षपातेन रक्षणं तद्विपक्षवधश्च सत्त्वोपाधिको नतु स्वत इति तदुपसंहरति—इत्थमिति ।

इत्थं नृतिर्यगृषिदेवझषावतारैर्लोकान्विभावयसि हंसि[2] जगत्प्रतीपान् । धर्मं महापुरुष पासि[1] युगानुवृत्तं छन्नः[3] कलौ यदभवस्त्रियुगो[4]ऽथ सत्त्वम्[5] ॥ ३१ ॥

१ पालयसि । २ घातयसि । ३ कलौ तु तन्न करोषि यतस्तदा त्वं छन्नोऽभवः । ४ अतस्त्रिष्वपि युगेष्वाविर्भावात्स एवंभूतस्त्वं त्रियुग इति प्रसिद्धः । ५ रजस्तमोविघातात् ॥ ३१ ॥

तदेवं भगवतस्तत्त्वं निरूप्य स्वस्य च तद्विचारायोग्यतां निवेदयन्प्रार्थयते–नैतदिति त्रिभिः ।

नैतन्मनस्तव कथासु विकुण्ठनाथ संप्रीयते दुरितदुष्टम्[1]असाधु तीव्रम्[2] । कामातुरं हर्षशोकभयैषणार्तं[3] तस्मिन्[4]कथं तव गतिं विमृशामि दीनः ॥ ३२ ॥

१ बहिर्मुखम् । २ दुर्धरम् । ३ हर्षशोकभयैरेषणात्रयेण चार्तं दुःखितमपि त्वत्कथासु न सम्प्रीयते । ४ एवंभूते मनसि सति कथं तव तत्त्वं विचारयामि ॥ ३२ ॥

किंच–जिह्वेति ।

जिह्वैकतोऽच्युत विकर्षति[1] माऽवितृप्ता[2] शिश्नोऽन्यतस्त्वगुदरं श्रवणं कुतश्चित् । घ्राणोऽन्यतश्चपलदृक्[3] क्व च कर्मशक्तिर्[4]बह्व्यः सपत्न्य इव गेहपतिं लुनन्ति[5] ॥ ३३ ॥

१ यतो मधुरादिरसस्तत आकर्षति २ क्षुधासन्तप्तं सत्सद्य एव यत्किञ्चिदाहारमात्रं प्रति । ३ चपला दृष्टिः । ४ कर्मेन्द्रियाणि । ५ त्रोटयन्ति ॥ ३३ ॥

न केवलमहमेक एवैवं कष्टां दशामापन्नः किन्तु महाजनोऽप्येवमेव क्लि·श्यत्यतः सर्वं जनं पालयेति प्रार्थयते—एवमिति।

**एवं स्वकर्मपतितं भववैतरण्यामन्योन्यजन्ममरणाशनभीतभीतम्।पश्यञ्जनं स्वपरविग्रहवैरमैत्रं हन्तेति पारचर पीपृहि मूढमद्य ॥ ३४ ॥**

१ यमद्वारनद्याम्। २ अन्योन्यतो यानि जन्मादीनि तेभ्योऽतिभीतम्। ३ स्वेषां परेषां च विग्रहे यथायथं वैरं मैत्रं च यस्यतम्।४ तस्याः पारे स्थित नित्यमुक्त। ५ अहो कष्टमित्येवमनुकम्प्याद्य। ६ वैतरणीमुत्तार्य पालय॥ ३४॥

एकेन मया कथं सर्वोऽपि जनस्तारणीय इति चेत्तत्राह—को न्विति।

**को न्वत्र तेऽखिलगुरो भगवन्प्रयास उत्तारणेऽस्य भवसम्भवलोपहेतोः। मूढेषु वै महदनुग्रह आर्तबन्धो किं तेन ते प्रियजनाननुसेवतां नः॥३५॥**

१ सर्वजनोत्तारणे न कोपि। २ कुतः। ततः सृष्ट्यादेः कारणस्य तव किमेतद्दुष्करमिति भावः। ३ उचितं चैतदित्याह। मूढेष्विति। त्वां च त्वदीयांश्च तारयिष्यामीमं दुराग्रहं मा कृथा इति चेत्तत्राह। तव ये प्रियजना भक्तास्ताननुसेवमानानां नोऽस्माकं तेनोत्तारणेन किम्। "कोऽतिप्रयासोऽसुरबालका हरेः कोन्वत्र तेऽखिलगुरो भगवन्प्रयासः। प्रह्लाद इत्थमुपमन्य मिथो नराणामीशेन सख्यमकरोदपनीय मायाम्" ॥ ३५ ॥

वत्स प्रह्लाद त्वां तावत्तारयिष्यामि तावतैव कृतार्थः स्याः किमनेन निर्बन्धेनेत्यत आह—नैवेति।

नैवोद्विजे पर दुरत्ययवैतरण्यास्त्वद्वीर्यगायनमहामृतमग्नचित्तः। शोचे ततो विमुखचेतस इन्द्रियार्थमायासुखाय भरमुद्वहतो विमूढान् ॥ ३६ ॥

१ सर्वोत्तम त्वद्वीर्यगायनमेव महामृतं तस्मिन्मग्नं चित्तं यस्य सोऽहं भववैतरण्या नैवोद्विजे किन्तु विमूढान् शोचामि। तानेवाह। २ महामृताद्विमुखं चेतो येषाम्, प्रत्युतेन्द्रियार्थनिमित्तं यन्मायासुखं तदर्थं कुटुम्बादिभारमुद्वहतः ॥ ३६ ॥

त्वं तावन्मुक्तिं गृहाण तांस्तु तत्त्वज्ञा मुनय उपदेक्ष्यन्तीति चेत्तत्राह—प्रायेणेति।

प्रायेण देव मुनयः स्वविमुक्तिकामा मौनं चरन्ति विजने न परार्थनिष्ठाः। नैतान्विहाय कृपणान्विमुमुक्ष एको नान्यं त्वदस्य शरणं भ्रमतोऽनुपश्ये ॥ ३७ ॥

१ विमुक्तिं नेच्छामि। २ तर्ह्यन्यं कमपि प्रार्थय मामेव किमिति निर्बध्नासीति चेदत आह। त्वत्तोऽन्यमस्य जनस्य शरणं न पश्यामि ॥ ३७ ॥

नन्वेते स्त्रीसम्भोगादिना सुखिन एव, न कृपणास्तत्राह—यदिति।

यन्मैथुनादिगृहमेधिसुखं हि तुच्छं कण्डूयनेन करयोरिव दुःखदुःखम्। तृप्यन्ति नेह कृपणा बहुदुःखभाजः कण्डूतिवन्मनसिजं विषहेत धीरः ॥ ३८ ॥

१ संघर्षणेनेव। २ दुःखमनुदुःखं यस्मिन्। ३ तर्हि दुःखत्वादेव ततो निर्वि-

श्च मुच्येरंस्तत्राह। कामुका बहुदुःखभाजोऽपीह गृहमेधिसुखे न तृप्यन्त्यलमिति न मन्यन्ते कण्डूतिवत्कामस्य दुःसहत्वात्। ननु केचित्कण्डूतिमपि सहन्ते कामं चेत्यत्राह। त्वत्प्रसादात्तु कश्चिद्धीर एव मनसिजं कामं विषहेत न तु सर्वे अत्रापि कण्डूतिवदिति दृष्टान्तः॥ ३८॥

ननु मौनादिभिर्मोक्षसाधनैः सुलभैव तेषामपि मुक्तिस्तत्राह—मौनेति।

**मौनव्रतश्रुततपोऽध्ययनस्वधर्मव्याख्यारहोजपसमाधय आपवर्ग्याः। प्रायः परं पुरुष ते त्वऽजितेन्द्रियाणां वार्ता भवन्त्युत न वात्र तु दाम्भिकानाम्॥ ३९॥**

१ अन्तर्यामिन् ये मौनादयो दश अपवर्गहेतवः प्रसिद्धाः। रहो विविक्तवासः ते तु प्रायश इन्द्रियभोगार्थं विक्रीणतां वार्ता जीवनोपाया भवन्ति। दाम्भिकानां तु वार्ता अपि भवन्ति वा न वा दम्भस्यानियतफलत्वात्॥ ३९॥

त्वज्ज्ञानं भक्तिं विना सकामैर्मौनादिभिर्न भवत्येवेत्याह—रूपे इति त्रिभिः॥

**रूपे इमे सदसती तव वेददृष्टे बीजाङ्कुराविव नचान्यदरूपकस्य। युक्ताः समक्षमुभयत्र विचिन्वते त्वां योगेन वह्निमिव दारुषु नान्यतः स्यात्॥ ४०॥**

बीजांकुराविव प्रवाहापन्ने इमे सदसती कार्यकारणे एव ते रूपे उपलक्षणभूते वेदेन दृष्टे प्रकाशिते नचान्यत् स्वसमवेतं गौरवादिकमिव देवदत्तादेः। कुतः। अरूपकस्य प्राकृतरूपादिशून्यस्य। अतो युक्ताः संयता एव भक्तियोगेन

प्रत्यक्षं त्वामुभयत्र कार्ये कारणे चानुगतं पश्यन्ति । मथनेन दारुषु वह्निमिव नान्यतः स्यात्त्वज्ज्ञानमिति शेषः । यद्वा ज्ञानप्रकारमेवाह । एतदुभयमन्यत प्रधानपरमाण्वादेर्न स्यात् । " स ऐक्षत " इत्यादि श्रुतेः । अतस्त्वमे कारणत्वात्सर्वानुस्यूत इति ॥ ४० ॥ तदेवाह—त्वं वायुरिति ।

**त्वं वायुरग्निरवनिर्वियदम्बुमात्राः प्राणेन्द्रियाणि हृदयं[1] चिद्[2]नुग्रह[3]श्च । सर्वं त्वमेव सगुणो[4] विगुण[5]श्च भूमन्नान्यत्त्वदस्त्यपि मनोवचसा[6] निरुक्तम्[7]॥४१॥**

१ मनः । २ चित्तम् । ३ अहङ्कारः देवतावर्गो वा । ४ स्थूलः । ५ सूक्ष्मः । ६ मनसा वचसा च । ७ प्रकाशितं किमपि त्वत्तोऽन्यन्नास्ति ॥ ४१ ॥

अभक्तास्तु स्वस्मिन्ननुगतमपि त्वां न जानन्तीत्याह—नैते इति ।

**नैते गुणा[1]नुगुणिनो महदादयो ये सर्वे मनःप्रभृतयः सह देवमर्त्यैः । आद्यन्तवन्त[2] उरुगाय विदन्ति हि[3] त्वामेवं विमृश्य सुधियो विरमन्ति शब्दात्[4] ॥ ४२ ॥**

१ गुणाद्यभिमानिनो देवाः । २ जडोपाधित्वात् अनाद्यन्तं निरुपाधिं त्व न विदन्ति। ३ हि यस्माद्विद्वांस एवं विचार्य। ४ अध्ययनादिव्यापाराद्विरमन्ति। त्वामेव समाधिनोपासते इत्यर्थः । तथा च श्रुतिः " किमर्था वयमध्येष्यामहे, किमर्था वयं यक्ष्यामहे " इति ॥ " नानुध्यायेद्बहून् शब्दान्वाचो विग्लापनं हि तत् " इति । स्मृतिश्च । " यदा ते मोहकलिलं बुद्धिर्व्यतितरिष्यति । तदा गन्तासि निर्वेदं श्रोतव्यस्य श्रुतस्य च " इत्यादि ॥ ४२ ॥

उपसंहरति—तदिति।

तत्तेऽर्हत्तम! नमःस्तुतिकर्मपूजाः कर्म स्मृतिश्चरणयोः श्रवणं कथायाम्। संसेवया त्वयि विनेति षडङ्गया किं भक्तिं जनः परमहंसगतौ लभेत॥ ४३॥

१ प्रणिपातस्तुतिसर्वकर्मार्पणानि। २ परिचर्या। ३ चरणयोः स्मृतिश्च। कथायां श्रवणं चेत्येवं षडङ्गया सम्यक् सेवया विना परमहंसानां प्राप्ये त्वयि जनः कथं भक्तिं लभेत। यस्मादेवं भक्तिं विना न मोक्षो नच भक्तिः सेवया विनाऽतः प्राक् प्रार्थितं त्वद्दास्ययोगमेव देहीति प्रकरणार्थः॥ ४॥

इति भागवते सप्तमस्कन्धे प्रह्लादस्तुतिः सम्पूर्णा॥



# मुचुकुन्दस्तुतिः ।

त्वद्भक्तिरेव केवलं दुर्लभा कामास्तु तुच्छा न वरणयोग्या इत्याशयेनाभक्तानां संसारमष्टभिः प्रपञ्चयन्मुचुकुन्दः स्तौति–विमोहित इति ।

**ॐश्रीमुचुकुन्द उवाच ॥ विमोहितोऽयं जन ईश मायया त्वदीयया त्वां न भजत्यनर्थदृक् । सुखाय दुःखप्रभवेषु सज्जते गृहेषु योषित्पुरुषश्च वञ्चितः ॥ १ ॥**

हे ईश ! योषित्पुरुषश्चेति द्विविधोऽप्ययं जनस्त्वदीयया मायया विमोहितोऽतोऽनर्थे संसारे दृक् दृष्टिर्यस्यासौ । यद्वा अर्थं परमार्थस्वरूपं त्वां न पश्यतीति तथा । अतस्त्वां न भजति किन्तु परस्परं वञ्चितः सन्सुखेच्छया दुःखानामेव प्रभवो येषु तेषु गृहेष्वेव सज्जत इति ॥ १ ॥

किंच कामसुखं सूकरादिष्वपि सम्भवति भगवद्भजनं तु न मानुषजन्मव्यतिरेकेणेति मानुषत्वं प्राप्य त्वामभजन्नतिमूढ इत्याह–लब्ध्वेति ।

**लब्ध्वा जनो दुर्लभमत्र मानुषं कथञ्चिदव्यङ्गमयत्नतोऽनघ । पादारविन्दं न भजत्यसन्मतिर्गृहान्धकूपे पतितो यथा पशुः ॥२॥**

अत्र कर्मभूमौ । अव्यङ्गमविकलाङ्गम् । किंच । असति विषयसुखे मतिर्यस्य सः गृहमेवान्धकूपस्तस्मिन्निपतितः । यथा पशुस्तृणलुब्धोऽन्धकूपे पततीति ॥ २ ॥

न केवलमस्य जनस्येयं गतिः किन्तु ममापि तथैवेत्याह–ममैष इति ।

**ममैष कालोऽजित निष्फलो गतो राज्यश्रियोन्नद्धमदस्य दुर्मतेः । मर्त्यात्मबुद्धेः सुतदारकोशभूष्वासज्जमानस्य दुरन्तचिन्तया ॥३॥**

मर्त्ये शरीरे आत्मबुद्धिर्यस्य तस्य ममात एव सुतादिष्वासज्जमानस्य ॥३॥

उन्नद्धमदत्वं प्रपञ्चयति—कलेवर इति ।

**कलेवरेऽस्मिन्घटकुड्यसंनिभे निरूढमानो नरदेव इत्यहम् । वृतो रथेभाश्वपदात्यनीकपैर्गां पर्यटंस्त्वाऽगणयन्सुदुर्मदः ॥४॥**

घटकुड्यादिसदृशे दृश्येऽनात्मनि यत एवं सुदुर्मदोऽभवमतो ममैष कालो निष्फलो गत इति ॥ ४ ॥

त्वामगणयन्तं त्वमाक्रामसीत्याह—प्रमत्तमिति ।

**प्रमत्तमुच्चैरितिकृत्यचिन्तया प्रवृद्धलोभं विषयेषु लालसम् । त्वमप्रमत्तः सहसाऽभिपद्यसे क्षुल्लेलिहानोऽहिरिवाखुमन्तकः ॥५॥**

प्रमत्तमनवहितम् । त्वामन्तकमविगणय्य देहादिष्वासक्तमिति यावत् । कुतः प्रमत्तम् । इतिकृत्यचिन्तया एवमेवं करणीयमिति मनोरथपरम्परया । मनोरथे भुग्नेऽपि विषयेषु लालसमुत्सुकं प्राप्तेऽपि पुनः प्रवृद्धो लोभस्तृष्णा यस्य तमन्तकस्त्वमभिभवसीत्यर्थः । क्षुधा सृक्किणी लेलिहानोऽहिराखुं मूषकमिवेति ॥५॥

किञ्च कालात्मना त्वयाऽभिपन्नो देह एवं भवतीत्याह—पुरेति ।

पुरा रथैर्हेमपरिष्कृतैश्चरन्मतङ्गजैर्वा नरदेवसंज्ञितः । स एव कालेन दुरत्ययेन ते कलेवरो विट्कृमिभस्मसंज्ञितः ॥६॥

श्वशृगालादिभिर्भक्षितो विट्संज्ञितस्तैरभक्षितः कृमिसंज्ञितो दग्धे भस्मसंज्ञितो भवति इति बुद्ध्या विचार्यैवंभूतशरीरे ममतां कुर्वन्तो जना हरिं नाराधयन्ति ते आत्मनि शत्रभूता ज्ञेयाः सततम् । यतः । "योनेः सहस्राणि बहूनि गत्वा दुःखेन लब्ध्वापि च मानुषत्वम् । सुखावहं ये न भजन्ति विष्णुं ते वै मनुष्यात्मनि शत्रुभूताः" इति ॥६॥

किंच अन्तकप्राप्तेः प्रागपि दिग्विजयिनो राज्ञोऽपि पारतन्त्र्यदुःखं तदवस्थमेवेत्याह-निर्जित्येति ।

निर्जित्य दिक्चक्रम[1]भूतविग्रहो वरासनस्थः समराजवन्दितः । गृहेषु मैथुन्यसुखेषु योषितां क्रीडामृगः पूरुष ईश नीयते ॥ ७ ॥

१ अभूतविग्रहोऽविद्यमानसंग्रामः । पूर्वं ये समाना राजानस्तै राजभिर्वन्दितोऽपि मिथुनीभावः सुरतमेव परं सुखं येषु तेषु योषितां गृहेषु क्रीडामृग इव इतस्ततो नीयते ॥ ७ ॥

किंच तत्रातितृष्णाकुलस्य न भोगक्षणः कश्चिदस्तीत्याह-करोतीति

करोति कर्माणि तपःसुनिष्ठितो निवृत्तभोगस्तदपेक्षया ददत् । पुनश्च भूयासमहं स्वराडिति प्रवृद्धतर्षो न सुखाय कल्पते ॥८॥

तपस्यधःशयनब्रह्मचर्यादौ सुनिष्ठितः । पुनश्च स्वराडिन्द्रः स्यामिति यद्वा जन्मान्तरेष्वेवमेव चक्रवर्ती स्यामिति । नियमानि ददत् ॥ ८ ॥

तदेवमष्टभिः श्लोकैरीशबहिर्मुखानां संसारं प्रपञ्च्य भक्त्या तन्निवृत्तिक्रममाह–भवापवर्ग इति ।

**भवापवर्गो भ्रमतो यदा भवेज्जनस्य तर्ह्यच्युत सत्समागमः । सत्संगमो यर्हि तदैव सद्गतौ परावरेशे त्वयि जायते मतिः ॥९॥**

हे अच्युत ! भ्रमतः संसरतो जनस्य यदा त्वदनुग्रहेण भवस्य बन्धस्यापवर्गोऽन्तो भवेत्प्राप्तकालः स्यात्तदा सतां सङ्गमो भवेत् । यदा च सत्सङ्गमो भवेत्तदा सर्वसङ्गनिवृत्त्या कार्यकारणनियन्तरि त्वयि भक्तिर्भवति । ततो मुच्यत इत्यर्थः ॥ ९ ॥

मम तु सत्सङ्गमात्पूर्वमेव यो राज्यादिसङ्गविच्छेदो जातः सोऽयं त्वया महाननुग्रहः कृत इत्याह–मन्य इति ।

**मन्ये ममानुग्रह ईश ते[1] कृतो राज्यानुबन्धापगमो यदृच्छया । यः प्रार्थ्यते साधुभि[2]रेकचर्यया वनं विविक्षद्भि[3]रखण्डभूमिपैः ॥१०॥**

१ त्वया । २ विवेकिभिः । ३ तपसे वनं प्रवेष्टुमिच्छद्भिः स्वयं त्यक्तुमलभमानैः प्रार्थ्यत इति ॥ १० ॥

तदेवं विषयसेवामार्गं भगवत्सेवामार्गं च विविच्य वरान्वृणीष्वेति यदुक्तं तत्रोत्तरमाह–न कामये इति ।

**न कामयेऽन्यं तव पादसेवनादकिञ्चन[1]प्रार्थ्यतमाद्वरं विभो । आराध्य कस्त्वां ह्यपवर्गदं हरे वृणीत आर्यो[2] वरमात्मबन्धनम् ॥११॥**

१ निवृत्ताभिमानिनः । २ विवेकी ॥११॥

**तस्माद्विसृज्याशिष ईश सर्वतो रजस्तमःसत्त्वगुणानुबन्धनाः । निरञ्जनं निर्गुणमद्वयं परं त्वां ज्ञप्तिमात्रं पुरुषं व्रजाम्यहम् ॥१२॥**

रजस्तमःसत्त्वगुणैरनुबध्यन्त इति तथा ता आशिष ऐश्वर्यादिशत्रुमारणादिधर्मादिरूपा विसृज्य परं पुरुषमीश्वरं ज्ञप्तिमात्रं ज्ञानघनम् । कुतः । निरञ्जनम् । तत्कुतः । निर्गुणम् । तदपि कुतः । अद्वयम् । अतएव । अक्षरं त्वां शरणं व्रजामीति ॥ १२ ॥

भुङ्क्ष्व तावद्भोगान्कैवल्यं तु करस्थमेवेति पुनर्वरैः प्रलोभयन्तं श्रीकृष्णं पादोपग्रहणेन प्रार्थयते—चिरमिति ।

**चिरमिह वृजिनार्तस्तप्यमानोऽनुतापैरवितृषषडमित्रोऽलब्धशान्तिः कथञ्चित् । शरणद समुपेतस्त्वत्पदाब्जं परात्मन्नभयमृतमशोकं पाहि मापन्नमीश १३**

वृजिनैः कर्मफलैरार्तः पुनस्तद्वासनाभिस्तप्यमानस्तथाऽप्यवितृषषडमित्रः तृडेव तृषा तृष्णा । न विगततृषाः षडमित्राः शत्रव इन्द्रियलक्षणा यस्य सः । अत एवालब्धशान्तिः कथञ्चिद्दैववशेन लब्धशान्तिरिति वा । शरणं स्वज्ञानं तद्ददातीति तथा । हे शरणद ! समुपेतः प्राप्तोऽहम् । अशोकत्वे हेतुः । अभयम् । तत्रापि हेतुः ऋतम् । सत्यम् । आपन्नमापदाव्याप्तं पाहीति॥ १३॥

इति दशमस्कन्धोत्तरार्धे मुचुकुन्दस्तुतिः ।

———०———

# अथ रासक्रीडा पञ्चाध्यायी प्रारभ्यते ।

श्रीशुक उवाच ।

भगवानपि तां रात्रीः शरदोत्फुल्लमल्लिकाः ।
वीक्ष्य रन्तुं मनश्चक्रे योगमायामुपाश्रितः ॥ १ ॥

ननु विपरीतमिदं परदारविनोदेन कन्दर्पाविजेतृत्वप्रतीतेः । मैवं "योगमायामुपाश्रित" इत्यादिषु स्वातन्त्र्याभिधानात्। तस्माद्रासक्रीडाविडम्बनं कामविजयख्यापनायेत्येव तत्त्वम् । किञ्च । शृङ्गारकथोपदेशेन विशेषतो निवृत्तिपरेयं पञ्चाध्यायीति व्यक्तीकरिष्यामः । १ 'यातावला व्रजं सिद्धा मयेमा रंस्यथ क्षपा' इति प्रतिश्रुता इत्यर्थः ॥१॥

तदोडुराजः[1][2] ककुभः[3] करैर्मुखं[4]
प्राच्या विलिम्पन्नरुणेन[5][6] शन्तमैः[7] ॥
सः[8] चर्षणीनामुदगाच्छुचो[9][10][11] मृज-[12]
न्प्रियः प्रियाया इव दीर्घदर्शनः[13] ॥ २ ॥

१ तस्मिन्नेव क्षणे तत्प्रीतये। २ चन्द्रः।३ दिशः। ४ किरणैः। ५ अरुणीकुर्वन्नित्यर्थः। ६ उदयरागेण। ७ सुखतमैः। ८ प्रसिद्धः । ९ जनानाम् । १० उदितः । ११ तापग्लानीः । १२ अपनयन् । १३ दीर्घकालेन दृष्टः प्रियः स्वप्रियाया मुखमरुणेन कुंकुमेन यथा विलिम्पति तथा ॥ २ ॥

दृष्ट्वा कुमुद्वन्तम[1]खण्ड[2]मण्डलं
रमा[3]ननाभं नवकु[4]ङ्कुमारुणम् ॥

वनं च तत्कोमलगोभिरञ्जितं
जगौ कलं वामदृशां मनोहरम् ॥ ३ ॥

१ विकसत्कुमुद्वन्तम्। २ पूर्णम्। ३ लक्ष्मीमुखाभम्। ४ नवकुङ्कुममिवारुणं चन्द्रम् । ५ चन्द्रमृदुरश्मिभिरञ्जितं वनं च दृष्ट्वा । ६ अगायत । ७ मधुरम्। ८ यथाभवति तथा ॥३॥

निशम्य गीतं तदनङ्गवर्धनं
व्रजस्त्रियः कृष्णगृहीतमानसाः ॥
आजग्मुरन्योन्यमलक्षितोद्यमाः
स यत्र कान्तो जवलोलकुण्डलाः ॥ ४ ॥

१ गीतध्वनिमार्गेण जग्मुः।२असापत्न्यायान्योन्यमज्ञापित उद्यमो याभिस्ताः। ३ कान्तो यत्रासीत्तत्र । ४ वेगेन चञ्चलानि कुण्डलानि यासाम् ॥४॥

श्रीकृष्णसूचकशब्दश्रवणेन तत्प्रवणचित्तानां तत्क्षणमेव त्रैवर्गिककर्मनिवृत्तिं द्योतयन्त्य इवार्धावसितं कर्म विहाय ययुस्तदाह–दुहन्त्य इति ।

दुहन्त्योऽभिययुः काश्चिद्दोहं हित्वा समुत्सुकाः ।
पयोऽधिश्रित्य संयावमनुद्वास्यापरा ययुः ॥ ५ ॥
परिवेषयन्त्यस्तद्धित्वा पाययन्त्यः शिशून्पयः ।
शुश्रूषन्त्यः पतीन्काश्चिदश्नन्त्योऽपास्य भोजनम् ॥६
लिम्पन्त्यः प्रमृजन्त्योऽन्या अञ्जन्त्यः काश्च लोचने
व्यत्यस्तवस्त्राभरणाः काश्चित्कृष्णान्तिकं ययुः ॥ ७॥

ताँ वार्यमाणाः पतिभिः पितृभिर्भ्रातृबन्धुभिः ।
गोविन्दापहृतात्मानो न न्यवर्तन्त मोहिताः॥ ८ ॥
अन्तर्गृहगताः काश्चिद्गोप्योऽ[8]लब्धविनिर्गमाः ।
कृष्णं तद्[9]भावेनायुक्ता दध्युर्मीलितलोचनाः ॥ ९ ॥
[10]दुःसहप्रेष्ठविरहतीव्रतापधुताशुभाः ।
[11]ध्यानप्राप्ताच्युताश्लेषनिर्वृत्त्या क्षीणमङ्गलाः ॥ १० ॥
तमेव परमात्मानं [12]जारबुद्ध्याऽपि सङ्गताः ।
जहुर्गुणमयं देहं [13]सद्यःप्रक्षीणबन्धनाः ॥ ११ ॥

१ स्थालीस्थम् २ चुल्ह्यामधिश्रित्यैतत्क्वाथमप्रतीक्षमाणाः।३ गोधूमकणान्नं पक्वम् । ४ अनुत्तार्य । ५ अङ्गोद्वर्तनादि कुर्वन्त्यः । ६ कृष्णतुष्ट्यर्थं कर्म तदासक्तमनसामन्यथाकृतमपि फलत्येवेति द्योतयन्नाह । व्यत्यस्तेति । स्थानतः स्वरूपतश्चोर्ध्वाधोधारणेन विपर्ययं प्राप्तानि वस्त्राभरणानि यासां ताः ॥७॥ ७ नच कृष्णाकृष्टमनसां विघ्ना भवन्तीत्याह ता वार्यमाणा इति ॥ ८ ॥ ८न लब्धो निर्गमो याभिस्ताः।९प्रागपि तद्भावनायुक्तास्तदा नितरां दध्युरित्यर्थः ॥ ९ ॥ १० किञ्च तदानीमेव तं परमात्मानं कृष्णं ध्यानतः प्राप्ताः सत्यो गुणमयं देहं जहुरित्याह—श्लोकद्वयेन दुःसहेति । तदप्राप्तिपरमदुःखभोगेन पापं क्षीणमित्यर्थः । ११ ध्यानाप्ताच्युतासङ्गपरमानन्देन क्षीणं पुण्यमित्यर्थः ॥१०॥१२ ननु कथं जहुः परमात्मेति ज्ञानाभावादित्याशंक्याह—जारबुद्ध्येति। नहि वस्तुशक्तिर्बुद्धिमपेक्षते । अन्यथा मत्वापि पीतामृतवदिति भावः ।
१३ ननु तदपि प्रारब्धकर्मबन्धने सति कथं जहुस्तत्राह—उक्तरीत्या क्षीणपापपुण्यबन्धनाः ॥ ११ ॥

ननु यथा पतिपुत्रादीनां वस्तुतो ब्रह्मत्वेऽपि न तद्भजनान्मोक्षस्तथा बुद्ध्यमात्रात् । एवं कृष्णेऽपि ब्रह्मबुद्ध्यभावेन तत्संगतिः कथं मुक्तिहेतुरिति शङ्कते राजा—कृष्णमिति ।

राजोवाच ।

कृष्णं विदुः परं[1] कान्तं[2] नतु ब्रह्मतया मुने ।
गुणप्रवाहोपरमस्तासां[3] गुणधियां कथम् ॥ १२ ॥

श्रीशुक उवाच ।

उक्तं[4] पुरस्तादेतत्ते चैद्यः सिद्धिं यथा गतः ।
द्विषन्नपि हृषीकेशं किमुताधोक्षजप्रियाः ॥ १३ ॥
नृणां[5] निःश्रेयसार्थाय व्यक्तिर्भगवतो नृप ।
अव्ययस्याप्रमेयस्य निर्गुणस्य गुणात्मनः[6] ॥ १४ ॥
कामं[7] क्रोधं भयं स्नेहमैक्यं[8] सौहृदमेव[9] च ।
नित्यं हरौ विदधतो यान्ति तन्मयतां हि ते ॥ १५ ॥

१ केवलम् । २ कमनीयम् । ३ संसारः कथं निवृत्त इति शेषः ॥ १२ ॥ ४ परिहरति—उक्तमिति । जीवेष्वावृतं ब्रह्मत्वं कृष्णस्य तु हृषीकेशत्वादनावृतमतो न तत्र बुद्ध्यऽपेक्षेति ॥ १३ ॥ ५ ननु देही कथमनावृतः स्यादत आह—नृणामिति । ६ गुणनियन्तुः । भगवतः एवंरूपा अभिव्यक्तिरतो न देहिसादृश्यमत्रवक्तुं युज्यत इति भावः ॥ १४ ॥

७ अतो यथाकथंचित्तदासक्तिकारणमित्याह—काममिति । ८ सम्बन्धम् । ९ भक्तिम् ॥ १५ ॥

न[1] चैवं विस्मयः कार्यो भवता भगवत्यजे।
योगेश्वरेश्वरे कृष्णे[2] यत[3] एतद्विमुच्यते ॥ १६ ॥
तां[4] दृष्ट्वान्तिकमायाता भगवान्व्रजयोषितः।
अवदद्वदतां श्रेष्ठो वाचः[5]पेशैर्विमोहयन् ॥ १७ ॥
श्रीभगवानुवाच।
स्वागतं वो महाभागाः प्रियं किं करवाणि वः।
व्रज[6]स्यानामयं कश्चिद्ब्रूतागमनकारणम् ॥१८॥
रज[7]न्येषा घोररूपा घोरसत्त्वनिषेविता।
प्रतियात व्रजं नेह स्थेयं स्त्रीभिः सुमध्यमाः॥१९॥
मातरः पितरः पुत्रा भ्रातरः पतयश्च वः।
विचि[8]न्वन्ति ह्यपश्यन्तो मा कृ[9]ध्वं बन्धुसाध्वसम्॥२०
दृ[10]ष्टं वनं कुसुमितं राके[11]शकररञ्जितम्।
यमु[12]नानिललीलैजत्तरुपल्लवशोभितम् ॥ २१ ॥

१ नच भगवतोऽयमतिभार इत्याह—न चैवमिति। २ श्रीकृष्णात्। ३ स्थावरादिकमपि ॥१६॥ ४ प्रस्तुतमाह—ता दृष्ट्वेति। ५ वाग्विलासैः ॥ १७ ॥ ६ सर्वाः ससंभ्रममागता विलोक्य सभयमिवाह—व्रजस्येति ॥ १८ ॥ ७ लज्जया मन्दहसितमालक्ष्याह—रजन्येषेति ॥ १९ ॥ ८ किंच मात्रादयो मृगयन्ते। ९ कृच्छ्रं मा कुरुत ॥ २० ॥ १० ईषत्प्रणयकोपेनान्यतो विलोकयन्तीः प्रत्याह—दृष्टमिति। ११ पूर्णेन्दुरश्मिरञ्जितम्। १२ यमुनास्पर्शिवातस्य मन्दगत्या कम्पमानैस्तरूणां पल्लवैः शोभितम् ॥ २१ ॥

तद्यात मा चिरं गोष्ठं शुश्रूषध्वं पतीन्[1]सतीः ।
क्रन्दन्ति वत्सा बालाश्च तान्पाययत दुह्यत ॥२२॥
[2]अथवा मदभिस्नेहाद्भवत्यो यन्त्रि[3]ताशयाः ।
आगता ह्यु[4]पपन्नं वः प्री[5]यन्ते मयि जन्तवः ॥२३॥
[6]भर्तुः शुश्रूषणं स्त्रीणां परो धर्मो ह्यमायया ।
तद्बन्धूनां च कल्याण्यः प्रजानां चानुपोषणम् ॥२४॥
दुःशीलो दुर्भगो वृद्धो जडो रोग्यधनोऽपि वा ।
पतिः स्त्रीभिर्न हातव्यो लोकेप्सुभिरपातकी ॥२५॥
अस्वर्ग्यमयशस्यं च फ[7]ल्गु कृ[8]च्छ्रं भयावहम् ।
जुगुप्सितं च सर्वत्र औप[9]पत्यं कुलस्त्रियाः ॥२६॥
[10]श्रवणाद्दर्शनाद्ध्यानान्मयिभावोऽनुकीर्तनात् ।
न तथा सन्निकर्षेण प्रतियात ततो गृहान् ॥२७॥

१ हे सत्यः ॥ २२ ॥ २ संरब्धक्षुभितदृष्टीः प्रत्याह–अथवेति । ३ वशीकृतचित्ताः । ४ युक्तम् । ५ प्रीता भवन्ति ॥ २३ ॥ ६ दृष्टादृष्टभयदर्शनेन निवर्तयति–भर्तुरित्यादिश्लोकत्रयेण ॥२४॥ २५ ॥ ७ तुच्छम् । ८ दुःसंपाद्यम् । ९ जारसौख्यम् ॥२६॥ १० किंच श्रवणादिति ॥२७॥

श्रीशुक उवाच ।

इति विप्रियमाकर्ण्य गोप्यो गोविन्दभाषितम् ।
विषण्णा भग्नसङ्कल्पाश्चिन्तामापुर्दुरत्ययाम् ॥२८॥

कृत्वा[1] मुखान्य[2]व शुचः[3] श्वसनेन शुष्य[4]द्बिम्बाधराणि चरणेन[5] भुवं लिखन्त्यः । अस्रैरुपात्त[6]मषिभिः कुचकुङ्कुमानि तस्थुर्मृ[7]जन्त्य उरुदुःखभराः[8] स्म तूष्णीम् ॥ २९ ॥ प्रेष्ठं[9] प्रियेतरमिव प्रतिभा[10]षमाणं कृष्णं तदर्थविनिवर्तितसर्वकामाः । नेत्रे विमृज्य रुदितोपहते स्म किञ्चित्सं[11]रम्भगद्गदगिरोऽब्रुवतानुरक्ताः ॥३०॥

॥२८॥ १ चिन्तां प्राप्तानां स्थितिमाह—कृत्वेति । २ अवाञ्चि । ३ शोकात् उद्गतेन निःश्वासेन । ४ शुष्यन्तो बिम्बफलसदृशा अधरा येषु । ५ तथांगुष्ठेन । ६ तथा गृहीतकज्जलैरश्रुभिः । ७ क्षालयन्त्यस्तूष्णीं स्थिताः । ८ उरुदुःखस्य भारो यासाम् ॥२९॥ ९ संरंभे कारणं प्रेष्ठम् । १० प्रत्याचक्षाणम् । ११ किञ्चित्कोपावेशेन गद्गदा गिरो यासां ताः ॥ ३० ॥

गोप्य ऊचुः । मैवं प्रभोऽर्हति भवान्गदितुं नृशंसं[12] सन्त्यज्य सर्वविषयांस्तव पादमूलम् । भक्ता[13] भजस्व दुरवग्रह[14] मा त्यजास्मान्देवो यथादिपुरुषो भजते मुमुक्षून् ॥३१॥

१२ क्रूरम् । १३ स्वच्छन्दाः । १४ तव पादमूलं सेवितवतीरस्मान्भजस्व मा त्यजेति ॥ ३१ ॥

यत्पत्यपत्यसुहृदामनुवृत्तिरङ्ग स्त्रीणां स्वधर्म इति धर्मविदा त्वयोक्तम् । अस्त्वेवमेतदुपदेशपदे त्वयीशे प्रेष्ठो भवांस्तनुभृतां किल बन्धुरात्मा।३२। कुर्वन्ति हि त्वयि रतिं कुशलाः स्व आत्मन्नित्यप्रिये पतिसुतादिभिरार्तिदैः किम् । तन्नः प्रसीद परमेश्वर मा स्म छिन्द्या आशां भृतां त्वयि चिरादरविन्दनेत्र ॥ ३३ ॥

१ धर्मविदेति सोपहासम् । २ उपदेशानां विषये त्वय्येवास्तु । ३ उपदेशपदत्वे हेतुः ईश इति। विविदिषावाक्येन सर्वोपदेशानामीशपरत्वावगमादि भावः। ४ ईशत्वे हेतुः। आत्मा किल भवानिति। भोग्यस्य हि सर्वस्य भोक्ता आत्मैवेश इत्यतः प्रेष्ठो बन्धुश्च भवानेवेति सर्वबन्धुषु करणीयं त्वय्येवास्ति त्यर्थः ।अथवा धर्मोपदेशानां पदे स्थाने धर्मोपदेष्टरि त्वयि सत्यस्मासु धर्मं जिज्ञासमानासु सतीषु त्वया धर्मविदा यदुक्तमेवमेतदस्तु । न त्वं धर्मोपदेष्टा किन्तु भवानात्मेति । अथवोक्तमेतदुपदेशगोचरे पुरुषेऽस्तु नाम त्वयि त्वीशे स्वामिनि सति एवं काका नैवम्। यतस्तनुभृतां त्वमात्मा फलरूप यद्वा पत्याद्यधिष्ठाने त्वय्येवैतदस्तु त्वत्सेवैव पत्यादीनां सेवा त्वामधिष्ठा विना पतिपुत्रादिः कोऽपि नास्ति–नामेति ॥३२॥ ५ एतदेव सदाचारे द्रढयन्त्यः प्रार्थयन्ते-कुर्वन्तीति। ६ शास्त्रनिपुणाः।तथाच शास्त्रम् "किं प्रजया करिष्यामो येषां नोऽयमात्मा लोकः " इति॥३३॥

चित्तं[1] सुखेन[2] भवताऽपहृतं गृहेषु यन्निर्विशत्युत करावपि गृह्यकृत्ये। पादौ पदं न चलतस्तव पादमूलाद्यामः कथं व्रजमथो करवाम किं वा ।३४।

१ किंच प्रतियातेति यदुक्तम्। तदशक्यं त्वयैव चित्तादीनामपहृतत्वादित्याहुः ॥ चित्तमिति । यदस्माकं चित्तमेतावन्तं कालं सुखेन गृहेषु निर्विशति तत्त्वयाऽपहृतम्। करावपि यौ गृहकृत्ये निर्विशतस्तावपि। २ सुखात्मना त्वयेति वा ॥ ३४ ॥

सिञ्चाङ्ग[3] नस्त्वदधरामृतपूरकेण हासावलोककलगीतजहृच्छयाग्निम्[4]। नो चेद्वयं[5] विरहजाग्न्युपयुक्तदेहा ध्यानेन याम[6] पदयोः पदवीं[7] सखे ते ।३५।
यर्ह्यम्बुजाक्ष[8] तव पादतलं रमाया दत्तक्षणं[9] क्वचिदरण्यजनप्रियस्य[10]। अस्प्राक्ष्म[11] तत्प्रभृति नान्यसमक्षमङ्ग स्थातुं त्वयाऽभिरमिता[12] बत पारयामः।३६।

३ अतः हे कृष्ण। ४ तवैव हाससहितेनावलोकेन कलगीतेन चोत्पन्नं कामाग्निं सिञ्च। ५ अयं तावदेकोऽग्निस्तथा विरहाज्जनिष्यते योऽग्निस्तेन च दग्धशरीरा योगिन इव। ६ प्राप्नुयामः। ७ अन्तिकम् ॥ ३५ ॥ ८ ननु स्वपतीनेवोपगच्छत एवाग्निं सिञ्चेयुरिति चेत्तत्राहुः। यर्हीति। ९ दत्तावसरं वा। १० तदपि क्वचिदेव न सर्वदाऽरण्यजनप्रियत्वादरण्ये क्वचिदेव यर्हि। ११ स्पृष्टवत्यो वयम्। १२ तत्र च त्वयाऽऽनन्दिताः सत्यः तदारभ्यान्यसमक्षं स्थातुमपि न पारयामस्तुच्छास्ते न रोचन्त इत्यर्थः ॥ ३६ ॥

श्रीर्यत्पदाम्बुजरजश्चकमे[1] तुलस्या लब्ध्वापि वक्षसि पदं किल भृत्यजुष्टम्[2]। यस्याः स्ववीक्षण[3]-कृतेऽन्यसुर[4]प्रयासस्तद्वद्वयं[5] च तव पादरजः प्रपन्नाः ॥३७॥ तन्नः प्रसीद वृजिनार्दन[6] तेऽङ्घ्रि-मूलं प्राप्ता विसृज्य[7] वसतीस्त्वदुपासनाशाः[8]। त्वत्सुन्दरस्मितनिरीक्षणतीव्रकाम--तप्तात्मनां[9] पुरुषभूषण देहि दास्यम् ॥ ३८ ॥ वीक्ष्या[10]लकावृतमुखं तव कुण्डलश्रीगण्डस्थलाधरसुधं हसितावलोकम्। दत्ताभयं च भुजदंडयुगं विलोक्य वक्षः श्रियैकरमणं[11] च भवाम दास्यः[12] ॥३९॥

१ त्वत्पादसौभाग्यं त्वतिचित्रमित्याहुः। श्रीरिति वक्षस्यसपत्नं स्थानं लब्ध्वापि तुलस्या सपत्न्या सह तव पादाम्बुजरजः कामयते स्म। २ भृत्यैः सर्वैर्जुष्टमिति सौभाग्यातिरेकोक्तिः। ३ श्रीरात्मानं विलोकयत्वित्येतदर्थम् ४ ब्रह्मादीनां तपोभिः प्रयासः सापि कामयते। ५ तद्वद्वयमपि तद्रजः प्रपन्नाः ॥३७॥ ६ दुःखहन्तः। ७ गृहान्। ८ त्वद्भजन एवाशा यासां ता वेणुगीतं योगिन इव प्राप्ताः। ९ तप्तचित्तानाम् ॥३८॥ १० ननु गृहस्वाम्यं विहाय दास्यं किमिति प्रार्थ्यतेऽत आहुः। वीक्ष्येति। केशान्तरैरावृत्तिर्यस्मिन् कुण्डलयोः श्रीगंडस्थलयोर्यस्मिन् अधरे सुधा यस्मिन् सस्मितं वीक्षणं यस्मिन् तादृशं मुखं वीक्ष्य। ११ श्रिया एकमेव रतिजनकम्। १२ दास्य एव ॥३९॥

[1]कास्त्र्यङ्ग ते कल[2]पदायतवेणुगीतसंमोहितऽऽर्य[3]चरितान्न चलेत्त्रिलोक्याम्। त्रैलोक्यसौभगमिदं च निरीक्ष्य रूपं [4]यद्गोद्विजद्रुममृगाः पुलकान्य[5]बिभ्रन् ॥४०॥ [6]व्यक्तं भवान् व्रजभयार्तिहरोऽभिजातो देवो यथादिपुरुषः सुरलोकगोप्ता। तन्नो निधेहि करपङ्कजमार्तबन्धो तप्तस्तनेषु च शिरःसु च किङ्करीणाम् ॥ ४१ ॥ इति वि[7]क्लवितं तासां श्रुत्वा योगेश्वरेश्वरः। प्रहस्य सदयं गोपीरात्मारामोऽप्य[8]रीरमत् ॥४२॥ ताभिः समेताभिरुदारचेष्टितः प्रि[9]येक्षणोत्फुल्लमुखीभिरच्युतः। [10]उदारहासद्विजकुन्ददीधितिर्व्यरोचतैणा[11]ङ्क इवोडुभिर्वृतः ॥ ४३ ॥

१ ननु जुगुप्सितमौपपत्यमित्युक्त तत्राहुः। का स्त्रीति। २ कलानि पदानि यस्मिंस्तद्दीर्घं मूर्छितं स्वरालापे भेदस्तेन। पाठान्तरे कलपदामृतमयं वेणुगीतं तेन मोहिता। ३ निजधर्मात् ४ यतः। ५ अबिभरुः त्वद्द्योतकश-ब्दश्रवणमात्रेणैवापि तावन्निजधर्मत्यागो युक्तः किं पुनस्त्वदनुभवेनेति भावः ॥४०॥ ६ निश्चितम् ॥ ४१ ॥ ७ पारवश्यप्रलपितम्। ८ गोपीरमयामास ॥ ४२ ॥ ९ प्रियस्येक्षणेनोत्फुल्लानि मुखानि यासाम्। १० उदारहासश्च द्विजाश्च तेषु कुन्दकुसुमवद्दीधितिर्यस्य। ११ चन्द्रः ॥ ४३ ॥

श्रीशुक उवाच ।

उपगीयमान उद्गायन्वनिताशतयूथपः ।
मालां बिभ्रद्वैजयन्तीं व्यचरन्मण्डयन्वनम् ॥ ४४ ॥
नद्याः पुलिनमाविश्य गोपीभिर्हिमवालुकम् ।
रेमे तत्तरलानन्दकुमुदामोदवायुना ॥ ४५ ॥
बाहुप्रसारपरिरम्भकरालकोरु-नीवीस्तनालभनन-
र्मनखाग्रपातैः । क्ष्वेल्यावलोकहसितैर्व्रजसुन्दरी-
णामुत्तम्भयन्रतिपतिं रमयांचकार ॥ ४६ ॥

४४ ॥४५॥ १ बाहुप्रसारश्च परिरम्भश्च करादीनां स्पर्शश्च परिहा-
सश्च नखाग्रपातश्च तैः । २ क्रीडयाऽवलोकैश्च हसितैश्च । ३ उद्दीपयंस्ता
रमयामास ॥४६॥

एवं भगवतः कृष्णाल्लब्धमाना महात्मनः ।
आत्मानं मेनिरे स्त्रीणां मानिन्योऽभ्यधिकं भुवि ॥ ४७ ॥
तासां तत्सौभगमदं वीक्ष्य मानं च केशवः ।
प्रशमाय प्रसादाय तत्रैवान्तरधीयत ॥ ४८ ॥

४ विमुक्तचित्तात् ॥४७॥ ५ अस्वाधीनताम् । ६ गर्वम् । ७ कश्चे-
शश्च तौ वशयतीति तथा सः ॥ ४८ ॥

इति श्रीभागवते दशमस्कन्धे पूर्वार्धे भगवतो रासक्री-
डावर्णनं नामैकोनत्रिंशोऽध्यायः ॥ २९ ॥

श्रीशुक उवाच ।

अन्तर्हिते भगवति सहसैव व्रजाङ्गनाः ।
अतप्यंस्तमचक्षाणाः करिण्य इव यूथपम् ॥१॥
गत्यानुरागस्मितविभ्रमेक्षितैर्मनोरमालापविहार-
विभ्रमैः। आक्षिप्तचित्ताः प्रमदा रमापतेस्तास्ता
विचेष्टा जगृहुस्तदात्मिकाः ॥ २ ॥ गतिस्मित-
प्रेक्षणभाषणादिषु प्रियाः प्रियस्य प्रतिरूढमू-
र्तयः। असावहं त्वित्यबलास्तदात्मिका न्यवेदि-
षुः कृष्णविहारविभ्रमाः ॥ ३ ॥

१ अपश्यन्त्यः ॥१॥ २ गत्या चानुरागस्मिताभ्यां विभ्रमेक्षितानि सविलासनिरीक्षणानि तैश्च। ३ मनोरमा आलापाश्च विहाराः क्रीडाश्चान्ये च विलासास्तैश्च रमापतेर्गत्यादिभिरेतैराकृष्टचित्ता अतस्तस्मिन्नेवात्मा यासां तास्तस्य। ४ विविधाश्चेष्टाः। ५ तदनुकरणेनाक्रीडन् ॥ २ ॥ ६ प्रियस्य गत्यादिष्वाविष्टा मूर्तयो यासां ताः। ७ अतः कृष्णस्येव क्रीडा विलासा यासां ताः अहमेव कृष्ण इति परस्परं निवेदितवत्यः ॥ ३ ॥

गायन्त्य उच्चैरमुमेव संहता विचिक्युरुन्मत्तक-
वद्वनाद्वनम् । पप्रच्छुराकाशवदन्तरं बहिर्भूतेषु
सन्तं पुरुषं वनस्पतीन् ॥ ४ ॥

८ वनाद्वनान्तरं गच्छन्त्योऽमृगयन् । ९ उन्मत्ततुल्यतामाह—भूतेषु मध्ये बहिश्च सन्तं वनस्पतीन् पप्रच्छुः ॥ ४ ॥

[1]दृष्टो वः कच्चिदश्वत्थ प्लक्ष न्यग्रोध नो मनः ।
नन्दसूनुर्गतो हृत्वा प्रेमहासावलोकनैः ॥ ५ ॥
[2]कच्चित्कुरबकाशोकनागपुन्नागचम्पकाः ।
रामानुजो मानिनीनामितो दर्पहरस्मितः ॥६॥

१ तत्प्रपञ्चयति नवभिः । महत्त्वादेते पश्येयुरित्याशयाऽश्वत्थादीन्पृच्छ न्ति–दृष्ट इति । अस्माकं मनो हृत्वा चोर इव गतो वो युष्माभिः किं दृ ॥ ५ ॥ २ महान्तः स्वपुष्पैर्बहूपकारिणश्चेति कुरबकादीन्पृच्छन्ति कच्चिदिति । हे कुरबकादयः दर्पहरं स्मितं यस्य स इतो गतः कच्चिद्दृष्टः॥६

कच्चित्तुलसि कल्याणि गोविन्दचरणप्रिये । सह
[3]त्वाऽलिकुलैर्बिभ्रद्दृष्टस्तेऽतिप्रियोऽच्युतः ॥ ७ ॥
[4]मालत्यदर्शि वः कच्चिन्मल्लिके जातियूथिके ।
प्रीतिं वो जनयन्यातः करस्पर्शेन माधवः॥ ८ ॥
[5]चूतप्रियालपनसासनकोविदारजम्ब्वर्कबिल्वबकु-
लाम्रकदम्बनीपाः । येऽन्ये [6]परार्थभवका [7]यमुनो-
पकूलाः शंसन्तु कृष्णपदवीं [8]रहितात्मनां नः॥९॥

३ त्वामलिकुलैः सह बिभ्रत्तवातिप्रियस्त्वया किं दृष्टः ॥७॥ ४ गुणा तिरेकेऽपि नम्रत्वादिमाः पश्येयुरिति पृच्छन्ति–मालतीति । करस्पर्शेन वः प्रीतिं जनयन् किं यातो माधवः ॥ ८ ॥ ५ फलादिभिः सर्वप्राणिन सन्तर्पका एते पश्येयुरिति पृच्छन्ति । चूतेति । ६ परार्थमेव जन्म येषां ते। ७ यमुनायाः कूलसमीपे वर्तमानास्तीर्थवासिनो भवन्तः। ८ शून्यचेतस

किं ते कृतं क्षि[1]ति तपो बत केश[2]वाङ्घ्रिस्पर्शो-
त्सवोत्पु[3]लकिताङ्गरुहैर्विभासि । अ[4]प्यङ्घ्रिसम्भव
उरु[5]क्रमविक्रमाद्वा आ[6]हो वराहवपुषः परिर-
म्भणेन ॥ १० ॥ अप्येण[7]पत्न्युपगतः प्रिय[8]येह
गा[9]त्रैस्तन्वन्दृशां सखि सुनिर्वृतिमच्युतो वः ।
का[10]न्ताङ्गसङ्गकुचकुङ्कुमरञ्जिताया कुन्दस्रजः
कुल[11]पतेरिह वा[12]ति गन्धः ॥ ११ ॥ बा[13]हुं प्रिया-
स उपधाय गृहीतपद्मो रामानुजस्तुलसिका[14]लि-

कृष्णमार्गं कथयन्तु ॥ ९ ॥ १ हे क्षिते । २ केशवाङ्घ्रिस्पर्शेनोत्सवो यस्याःसा। ३ कुतः । अङ्गरुहैरुत्पुलकिता शोभसे । ४ तत्र विशेषं पृच्छन्ति ऽकिमयमुत्सवोङ्घ्रिसम्भवोऽधुना तवैकदेशाङ्घ्रिस्पर्शसम्भूतः । ५ यद्वा नैतावत्किन्तु पूर्वमेव त्रिविक्रमस्य यदा सर्वाक्रमणात् । ६ अथवा नैतावदेवापि तु ततोऽपि पूर्वं वराहस्य वपुषः परिरंभणेन । अतस्त्वया नूनं दृष्टस्तं दर्शयेति ॥ १० ॥ ७ हरिण्या दृष्टिप्रत्यासत्त्या कृष्णदर्शनं सम्भाव्याहुः अपीति । ८ सह । ९ सुन्दरैर्मुखबाह्वादिभिः । १० प्रियया सहेति यदुक्तं तत्र द्योतकम् । ११ कृष्णस्य । १२ आगच्छति ॥ ११ ॥ १३ फलभारेण नतांस्तरून् कृष्णं दृष्ट्वा प्रणता इति मत्वा प्रियया सह तस्य गतिविलासं सम्भावयन्त्यः पृच्छन्ति । बाहुमिति । १४ तुलसिकाया अलिकुलैरतस्तदामोदमदा-

कुलैर्मदान्धैः । अन्वीयमान इह वस्तरवः प्रणामं
किं वाऽभिनन्दति चरन्प्रणयावलोकैः ॥१२॥

न्धैरनुगम्यमान इव चरन् ॥ १२ ॥

पृच्छतेमा लता बाहूनप्याश्लिष्टा वनस्पतेः ।
नूनं तत्करजस्पृष्टा बिभ्रत्युत्पुलकान्यहो ॥ १३ ॥
इत्युन्मत्तवचोगोप्यः कृष्णान्वेषणकातराः ।
लीला भगवतस्तास्ता ह्यनुचक्रुस्तदात्मिकाः॥ १४॥

१ काश्चिदाहुः । हे सख्य इमा लताः कृष्णेन संगता नूनमत इमाः पृच्छत । ननु स्वपतिसंगतौ तत्संगतिर्दुर्घटा न वनस्पतेः पत्युर्बाहुनाऽऽश्लिष्टा अपि । २ अहो भाग्यं नूनं तन्नखैः स्पृष्टा, यत् उत्पुलकानि बिभ्रति नहि स्वपतिसङ्गत्वावीदृक् पुलकसम्भव इति भाव ॥ १३ ॥ ३ उन्मत्तवत्पप्रच्छुरित्येतत्प्रपञ्चितमिदानीं "रमापतेस्तास्त विचेष्टा जगृहुस्तदात्मिकाः" इति यदुक्तं तत्प्रपञ्चयति—इतीति । ४ उन्म त्तवचसश्च ता गोप्यश्च । ५ कृष्णान्वेषणेनातिविह्वलाः । ६ अनुकृत वत्यः ॥ १४ ॥

कस्याश्चित्पूतनायन्त्याः कृष्णायन्त्यपिबत्स्तनम्
तोकायित्वा रुदन्त्यन्या पदाऽहन् शकटायतीम्। १५

७ कस्याश्चिदित्यादिभिश्चतुर्भिरनुकरणं प्रपञ्च्यते । ततश्चतुर्भिस्तन्मयत पुनरेकेनानुकरणमिति विवेकः ॥ ८ पूतनावदाचरन्त्याः । ९ कृष्णवदाचरन्ती स्तनमपिबत् । १० तोकवदात्मानं कृत्वा ॥१५॥

दैत्यायित्वा जहारान्यामेका कृष्णार्भभावनाम्।
रिङ्गयामास काप्यङ्घ्री कर्षन्ती घोषनिःस्वनैः।१६।

१ तृणावर्तवदात्मानं कृत्वा। २ कृष्णस्य बाल्यं भावयति या तामन्यां जहार ॥१६॥

कृष्णरामायिते द्वे तु गोपायन्त्यश्च काश्चन।
वत्सायन्ती हन्ति चान्या तत्रैका तु बकायतीम्।१७।
आहूय दूरगा यद्वत्कृष्णस्तमनुवर्ततीम्।
वेणुं क्वणन्तीं क्रीडन्तीमन्याः शंसन्ति साध्विति।१८।
कस्यांचित्स्वभुजं न्यस्य चलन्त्याहापरा ननु।
कृष्णोऽहं पश्यत गतिं ललितामिति तन्मनाः॥१९॥
माभैष्ट वातवर्षाभ्यां तत्त्राणं विहितं मया।
इत्युक्त्वैकेन हस्तेन यतन्त्युन्निदधेऽम्बरम् ॥ २० ॥
आरुह्यैका पदाक्रम्य शिरस्याहापरां नृप।
दुष्टाहे गच्छ जातोऽहं खलानां ननु दण्डधृक् ॥२१॥
तत्रैकोवाच हे गोपा दावाग्निं पश्यतोल्बणम्।
चक्षूंष्याश्वपिदध्वं वो विधास्ये क्षेममञ्जसा ॥२२॥

॥१७॥ ३ दूरे वर्तमाना गाः। ४ यथा कृष्णस्तथाहूय। ५ कृष्णमनुवर्तमानाम् 'अनुकुर्वन्तीम्' इति वा पाठः ॥१८॥ १९ ॥ ६ प्रयत्नं कुर्वती। ७ रंत्तउयी वस्त्रमूर्ध्वं धृतवती ॥२०॥२१॥ ८ निमीलयत ॥ २२ ॥

बद्धाऽन्यया स्रजा काचित्तन्वी तत्र उलूखले।
भीता सु[1]दृक्पिधायास्यं भेजे भीति[2]विडम्बनम्॥२३॥

१ सुनयनमास्यं पिधाय। २ भयानुकरणम् ॥२३॥

[3]एवं कृष्णं पृच्छमाना वृन्दा[4]वनलतास्तरून्।
व्यचक्षत [5]वनोद्देशे पदानि परमात्मनः॥ २४ ॥
पदानि व्यक्तमेतानि नन्दसूनोर्महात्मनः।
लक्ष्यन्ते हि ध्वजाम्भोजवज्राङ्कुशयवादिभिः॥२५॥

३ पुनरपि। ४ वृन्दावने लतास्तरूंश्च कृष्णं पृच्छन्त्यः। ५ वनप्रदेशेऽपश्यन् ॥ २४ ॥ २५ ॥

तैस्तैः पदैस्तत्पदवीमन्विच्छन्त्योऽग्रतोबलाः।
वध्वाः पदैः सु[6]पृक्तानि विलोक्यार्ताः समब्रुवन्॥२६॥
कस्या पदानि चैतानि याताया नन्दसूनुना।
अंस[7]न्यस्तप्रकोष्ठायाः [8]करेणोः करिणा यथा॥ २७॥

६ संमिश्राणि ॥ २६ ॥ ७ तेनांसे न्यस्तः प्रकोष्ठो यस्याः। ८ हस्तिन्याः ॥ २७ ॥

अनयाऽऽराधितो नूनं भगवान्हरिरीश्वरः।
यन्नो विहाय गोविन्दः प्रीतो यामनयद्[9]रहः॥२८॥

९ एकान्तस्थानम् ॥२८॥

धन्या अहो अमी आल्यो[1] गोविन्दा[2]ङ्घ्र्यब्जरेणवः ।
यान्[3]ब्रह्मेशो रमादेवी दधुर्मूर्ध्न्यघनुत्तये ॥ २९ ॥

१ हे सख्यः । २ गोविन्दाङ्घ्र्यब्जरेणवोऽतिपुण्याः । ३ तत्र हेतुः यानिति । अस्माभिरप्येतद्रेणवभिषेकेण तथैव कृष्णः प्राप्तुं शक्य इति भावः ॥ २९ ॥

तस्[4]या अमूनि नः क्षोभं कुर्वन्त्युच्चैः पदानि यत् ।
यैकापहृत्य गो[5]पीनां रहो भुङ्क्तेऽच्युताधरम् ॥३०॥
न[6] लक्ष्यन्ते पदान्यत्र तस्या नूनं तृणाङ्कुरैः ।
खिद्य[7]त्सुजाताङ्घ्रितलामुन्निन्ये प्रेयसीं प्रियः॥३१॥
अत्र प्रसूनावचयः प्रियार्थे प्रेयसा कृतः ।
प्र[8]पदाक्रमणे एते पश्यतासकले पदे ॥ ३२ ॥
केश[9]प्रसाधनं त्वत्र कामिन्याः कामिना कृतम् ।
ता[10]नि चूडयं[11]ता कान्तामुपविष्टामिह ध्रुवम् ॥३३॥

४ अन्या आहुः । तस्याः इति । ५ गोपीनां सर्वस्वम् । अयं भावः । भवेदेवं यदि तस्याः पदानि संपृक्तानि न भवेयुस्तानि तु नो दुःखं कुर्वन्तीति ॥३०॥ ६ 'तदसंपृक्तान्केवलं कृष्णपादरेणूनेव विचिन्वन्त्यस्तान्दृष्ट्वा पुनरत्यन्तं समनयन् । तदाह श्लोकत्रयेण । न लक्ष्यन्त इति । ७ खिद्यति सुकुमारे अङ्घ्रितले यस्यास्तां स्कन्धमारोपितवान् ॥ ३१॥ ८ प्रपदाभ्यां क्षोणीमर्दनं ययोः । अत एवासकले पदे पश्यत ॥ ३२ ॥ ९ तस्याः कृष्णाजान्वन्तरुपविष्टायाश्चिह्नं दृष्ट्वाऽऽहुः। केशप्रसाधनमिति । १० कान्तामभिकृत्य तानि प्रसूनानि । ११ चूडानुकारेण बध्नता ध्रुवमुपविष्टम् ॥ ३३ ॥

रेमे[1] तया चात्मरत[2] आत्मारामो[3]ऽप्यखण्डितः[4] ।
कामिनां[5] दर्शयन्दैन्यं स्त्रीणां चैव दुरात्मनाम् ॥ ३४ ॥

१ रेमे इत्यादि शुकोक्तिः । २ स्वतस्तुष्टः । ३ स्वक्रीडः । ४ स्त्रीविभ्रमैरनाकृष्टोऽपि । ५ तथा चेत्किमिति रेमेऽत आह । कामिनामिति ॥ ३४ ॥

इत्येवं दर्शयन्त्यस्ताश्चेरुर्गोप्यो विचेतसः ।
यां गोपीमनयत्कृष्णो विहायान्याः स्त्रियो वने ३५
सा[6] च मेने तदात्मानं वरिष्ठं सर्वयोषिताम् ।
हित्वा गोपीः कामयाना[7] मामसौ भजते प्रियः ३६
ततो गत्वा वनोद्देशं दृप्ता केशवमब्रवीत् ।
न पारयेऽहं चलितुं नय मां यत्र ते मनः ॥ ३७ ॥
एवमुक्तः[8] प्रियामाह स्कन्ध आरुह्यतामिति ।
ततश्चान्तर्दधे[9] कृष्णः सा वधूरन्वतप्यत ॥ ३८ ॥
हा नाथ[10] रमण प्रेष्ठ क्वासि क्वासि महाभुज ।
दास्यास्ते कृपणाया मे सखे दर्शय सन्निधिम् ३९

॥ ३५ ॥ ६ स्त्रीणां दुरात्मतामाह । सा चेति द्वाभ्याम् । साचेति । ७ काम आगमनसाधनं यासां ता गोपीर्हित्वा मां भजत इति हेतोरात्मानं वरिष्ठं मेने ॥ ३६ ॥ ३७ ॥ ८ कामिनां दैन्यं दर्शयति । एवमिति । ९ अखण्डितत्वमाह । ततश्चेति । तस्यां स्कन्धारोहोद्यतायामन्तर्हित इत्यर्थः ॥ ३८ ॥ १० अनुतापमाह । हा नाथेति ॥ ३९ ॥

अ[1]न्विच्छन्त्यो भगवतो मार्गं गोप्योऽविदूर[2]तः ।
ददृशुः प्रियविश्लेषमोहितां दुःखितां सखीम्॥४०॥
तया कथितमाकर्ण्य मानप्राप्तिं च माधवात् ।
अवमानं च दौरात्म्याद्विस्मयं परमं ययुः॥ ४१ ॥

१ मृगयमानाः । २ समीपे ॥ ४० ॥ ४१ ॥

ततोऽविशन्[3]वनं चन्द्रज्योत्स्ना यावद्विभाव्यते ।
तमः प्रविष्टमालक्ष्य ततो[4] निववृतुः स्त्रियः॥ ४२ ॥
त[5]न्मनस्कास्तदालापास्तद्विचेष्टास्तदात्मिकाः ।
तद्गुणानेव गायन्त्यो नात्मागाराणि सस्मरुः॥४३॥
पुन[6]ः पुलिनमागत्य कालिन्द्याः कृष्णभावनाः ।
समवेता जगुः कृष्णं तदा[7]गमनकाङ्क्षिताः॥४४॥

इति श्रीभागवते दशमस्कन्धे पूर्वार्धे रासक्रीडायां कृष्णान्वेषणं नाम त्रिंशत्तमोऽध्यायः ॥ ३० ॥

३ ततस्तयाऽपि सहिताः कृष्णान्वेषणाय वनमविशन् । ४ हरेरन्वेषणान्निवृत्ताः ॥४२॥ ५ एवं तमप्राप्ता अपि स्वगृहान्नैव स्मृतवत्यः । स एवात्मा यासां ताः तन्मय्य इत्यर्थः ॥४३॥ ६ किन्तु पूर्वं यत्र श्रीकृष्णेन संमतिरासीत्तदेव कालिन्द्याः पुलिनमागत्य कृष्णं भावयन्ति ध्यायन्तीति तथा ताः । ७ कृष्णस्यागमनं कांक्षितं यासां ता मिलिताः सत्यः कृष्णमेव जगुरिति ॥ ४४ ॥

ॐ गोप्यऊचुः ॥ जयति[1] तेऽधिकं जन्मना व्रजः
श्रयत[2] इन्दिरा शश्वदत्र हि। दयित दृश्यतां दिक्षु
तावकास्[3]त्वयि धृतासवस्त्वां विचिन्वते ॥ १ ॥
शरदु[4]दाशये साधुजातसत्सरसिजोदरश्रीमुषा
दृशा । सुरत[5]नाथ तेऽशुल्क[6]दासिका वरद निघ्नतो
नेह[7] किं वधः ॥२॥ विष[8]जलाप्ययाद्व्याल[9]राक्ष-
साद्वर्षमारुताद्वैद्युता[10]नलात् । वृष[11]मया[12]त्मजाद्वि-

१ हे दयित ते जन्मना व्रजोऽधिकं यथा भवति तथोत्कर्षेण वर्तते । २
यस्मात्त्वमत्र जातस्तस्माल्लक्ष्मीरत्र व्रजमलङ्कृत्य वर्तते । ३ एवं व्रजे सर्वस्मि
न्मोदमानेऽत्र तु त्वदीया गोपीजनास्त्वदर्थमेव कथंचिद्धृता असवो यैस्ते त्व
विचिन्वतेऽतस्त्वया प्रत्यक्षीभूयताम् ॥ १ ॥ ४ अत्र स्वतन्त्राणां बहून
वक्तृत्वादपरा आहुरिति सर्वश्लोकेष्ववधारणा । अथापि संगतिरुच्यते । त
विचिन्वन्तु मम किमिति चेत्तत्राह–शरदिति । शरत्कालीनसरसि सम्यग्जा
तफुल्लाब्जान्तरपत्रश्रीमुषा दृशा । ५ सम्भोगपते । ६ अमूल्यदासीर्नो मारयत
स्तव। ७ त्वया क्रियमाणो लोकेऽयं वधो न भवति किम् । शस्त्रेणैव वधो व
किम् दृशा वधो न भवति किंतु भवत्येव अतस्तव दृशा अपह
तप्राणप्रत्यर्पणाय त्वया दृश्यतामिति भावः । त्वया दृश्यतामिति
सर्वत्र वाक्यशेषः ॥ २ ॥ ८ किंच बहुभ्यो मृत्युभ्यः कृपया
रक्षित्वा किमितीदानीं दृशा मन्मथं प्रेष्य घातयसीत्याहुः । विषेति । विषमय-
जलोत्पन्ननाशात् ।९ अघासुरात्। १० अशनिपातात्। ११ अरिष्टासुरात्। १

श्[1]वतोभयादृष[2]भ ते वयं रक्षिता मुहुः ॥ ३ ॥

व्योमासुरात्। १ अन्यस्मादपि कालियदमनादिना । २ श्रेष्ठ किमि-
दानीमुपेक्षस इति भावः ॥ ३ ॥

न[3]ऽखलु गोपिकानन्दनो भवानखिलदेहिनामन्त-
रा[4]त्मदृक् । विखन[5]सार्थितो विश्वगुप्तये सख उदे-
यि[6]वान्सात्वतां कुले ॥४॥ विर[7]चिताभयं वृष्णि-
धुर्य ते शरणमीयुषां संसृतेर्भयात् । करसरोरुहं
कान्त कामदं शिरसि देहि नः श्री[8]करग्रहम् ॥५॥
व्रजजनार्तिहन्वीर योषितां निज[9]जनस्मयध्वंसन-
स्मित । भज[10] सखे भवत्किङ्करीः स्म नो ज[11]लरु-
हाननं चारु दर्शय ॥ ६ ॥

३ किंच विश्वपालनायावतीर्णस्य तव भक्तोपेक्षाऽत्यन्तमनुचितेत्याशयेना-
हुः । न खल्विति । ४ बुद्धिसाक्षी । ५ ब्रह्मणा । ६ उदितः ॥४॥ ७
तस्मात्त्वद्भक्तानामस्माकमेतत्प्रार्थना चतुष्टयं सम्पादयेत्याहुः—विरचितेति । दत्ता-
भयम् । ८ लक्ष्मीपाणिग्राहकं स्वकराब्जं नः शिरसि देहि ॥ ५ ॥ ९
स्वकीयानां गर्वहर्तृस्मित । १० आश्रय स्मेति निश्चितम् । ११ प्रथमं
तावज्जलरुहाननं योषितां नो दर्शय ॥ ६ ॥

प्र[12]णतदेहिनां पापकर्शनं तृण[13]चरानुगं श्रीनिके[14]त-

१२ विशेषेण प्रणताघहंतृ । १३ कृपया पशूनामप्यनुगम् । १४ सौभाग्येन।

नम् । फणिफणार्पितं[1] ते पदाम्बुजं कृणु[2] कुचेषु नः कृन्धि हृच्छयम्[3] ॥ ७ ॥ मधुरयागिरा वल्गुवाक्यया बुधमनोज्ञया[4] पुष्करेक्षण । विधिकरीरि[5]मावीर मुह्यतीरधरशीधुनाप्याययस्व[6] नः ॥ ८ ॥ तव कथामृतं[7] तप्तजीवितं[8] कविभिरीडितं[9] कल्मषापहम्[10] । श्रवणमङ्गलं[11] श्रीमदाततं[12][13] भुवि गृणन्ति[14] ये भूरिदा[15] जनाः ॥ ९ ॥

१ वीर्यातिरेकेण। २ कुरु । ३ कामं छिन्धि ॥ ७ ॥ ४ गंभीरयेत्यर्थः। ५ किङ्करीर्नः । ६ संजीवय ॥ ८ ॥ ७ किंचास्माकं त्वद्विरह प्राप्तमेव मरणं किन्तु त्वत्कथामृतं पाययद्भिः सुकृतिभिर्वञ्चितमित्याहुः । तवेति । कथैवामृतम् । ८ अत्र हेतुः । ९ प्रसिद्धामृतादुत्कर्षमाहुः । ब्रह्मादिभिरपि स्तुतम् । देवभोग्यं त्वमृतं तैस्तुच्छीकृतम् । १० कामकर्मनिरसनं तत्त्वमृतं नैवं भूतम् । ११ श्रवणमात्रेण कल्याणकरं तत्त्वनुष्ठानापेक्षम् । १२ सुशान्तिदं तत्तु मादकम् । १३ एवंभूतं त्वत्कथामृतमाततं यथा भवति तथा ये भुवि । १४ निरूपयन्ति । १५ ते जना बहुदातारः जीवितं ददतीत्यर्थः । यद्वा पूर्वजन्मसु बहुदत्तवन्तः सुकृतिन इत्यर्थः । एतदुक्तं भवति । ये केवलं कथामृतं निरूपयन्ति तेऽपि तावदतिधन्याः किं पुनर्ये त्वां पश्यन्त्यतः प्रार्थयामहे त्वया दृश्यतामिति ॥ ९ ॥

प्रहसितं[16] प्रिय प्रेमवीक्षणं विहरणं च ते ध्यान-

१६ ननु मत्कथाश्रवणेनैव निवृत्ता भवत किं मद्दर्शनेन । न। त्वद्विला-

मङ्गलम् । रहसि संविदो यां[1] हृदिस्पृशः कुहक[2] नो मनः क्षोभयन्ति हि ॥ १० ॥ चलसि[3] यद्व्र[4]-जाच्चारयन्पशून्नलिनसुन्दरं नाथ ते पदम् । शिलै[5]तृणाङ्कुरैः सीदतीति[6] नः कलिलतां[7] मनः कान्त गच्छति ॥ ११ ॥ दिन[8]परिक्षये नीलकु-न्तलैर्वनरुहा[9]ननं बिभ्रदावृतम् । घनै[10]रजस्वलं दर्श-यन्[11]मुहुर्मनसि नः स्मरं वीर यच्छसि ॥ १२ ॥

सक्षुभितचित्ता वयं तत्रापि शांतिं न विन्दाम इत्याहुः—प्रहसितमिति । १ संकेतनर्माणि । २ हे कपट । ३ किंच त्वयि वयमतिप्रेमा-र्द्रचित्तास्त्वं पुनरस्मासु केन हेतुना कपटमाचरसीत्याहुः श्लोकद्वयेन—चलसीति । ४ यदा । ५ शिलैः कणिशैस्तृणैरङ्कुरैश्च । ६ क्लिष्येदिति एवं नो मनः । ७ अस्वास्थ्यं प्राप्नोति । एवंभूतास्त्वद्दुःखशङ्कितचित्ता वयम् ॥ १० ॥ ॥ ११ ॥ ८ त्वं तु सायंकाले नीलकुन्तलैरावृतम् । ९ अलिमालाकुलपरा-गच्छुरितपद्मतुल्यमाननं बिभ्रत् । १० गोरजश्छुरितम् । ११ तच्च मुहुर्मुहुर्दर्शयन्नो मनसि केवलं स्मरमर्पयसि । नतु सङ्गं ददासीति कपटस्त्वमिति भावः ॥ १२ ॥

प्रणत[12]कामदं पद्मजार्चितं धरणिमण्डनं ध्येय[13]मा-पदि । चरणपङ्कजं शन्तमं[14] च ते रमण नः स्तने[15]-

१२ अतोऽधुना कपटं विहायैवं कुर्विति प्रार्थयन्ति श्लोकद्वयेन-प्रणतकामदमिति । १३ ध्यानमात्रेणैवापन्निवर्तकम् । १४ सेवासमयेऽपि सुखतमम् । १५ कामता

ष्वर्पयाधिहन् ॥ १३ ॥ सुरतवर्धनं शोकनाशनं [1]स्वरितवेणुना सुष्ठुचुम्बितम्। [2]इतररागविस्मारणं नृणां वितर वीर नस्तेऽधरामृतम् ॥ १४ ॥ [3]अटति यद्भवानह्नि[4] काननं त्रुटि[5]र्युगायते त्वामपश्यताम्। कुटिलकुन्तलं श्रीमुखं च ते जड उदीक्षतां पक्ष्मकृद्दृशाम् ॥ १५ ॥ पतिसुतान्वयभ्रातृबान्धवानतिवि[6]लङ्घ्यतेऽन्त्यच्युतागताः। गतिविदस्त[7]वोद्गीत[8]मोहिताः कितव योषितः कस्त्यजेन्निशि ॥१६॥ [9]रहसि संविदं हृच्छयोदयं

पशान्तये नः स्तनेष्वर्पय॥१३॥ १ नादितेन वेणुना सुष्ठु चुम्बितमिति नादामृतवासितमिति भावः। २ सार्वभौमादिसुखेष्वपीच्छां विलापयति ॥१४॥ ३ किंच क्षणमपि त्वददर्शने दुःखं दर्शने च सुख दृष्ट्वा सर्वसङ्गपरित्यागेन यतय इव वयं त्वामुपागतास्त्वं तु कथमस्मांस्त्यक्तुमुत्सहसे इति सकरुणमूचुः—अटतीति। ४ यदा भवान् वृन्दावनं प्रतिदिने गच्छति तदा त्वामपश्यतां प्राणिनां क्षणार्धमपि युगवद्भवति एवमदर्शने दुःखमुक्तम्। ५ पुनश्च कथंचिद्दिनान्ते तव श्रीमन्मुखमुच्चैरीक्षमाणानां तेषां दृशां पक्ष्मकृद्ब्रह्मा मन्द एव। निमेषमात्रमप्यन्तरमसह्यमिति दर्शने सुखमुक्तम् ॥ १५ ॥ ६ तस्मात् हे अच्युत ते समीरमागता वयम्। ७ अस्मदागमनं जानतः। ८ उच्चैर्गीतेन मोहिताः हे कितव एवंभूता योषितो निशि स्वयमागतास्त्वामृते कस्त्यजेन्न कोऽपीत्यर्थः॥ १६ ॥ ९ अतस्त्वया त्यक्तानामस्माकं प्राक्तनत्वद्दर्शननिदानहृद्रोगस्य त्वत्सङ्गत्यैव

प्रहसिताननं प्रेमवीक्षणम् । बृहदुरःश्रियो वीक्ष्य धाम ते मुहुरतिस्पृहा मुह्यते मनः ॥ १७ ॥ व्रजजनौकसां व्यक्तिरङ्ग ते वृजिनहन्त्र्यलं विश्वमङ्गलम् । त्यज मनाक्च नस्त्वत्स्पृहात्मनां स्वजनहृद्रुजां यन्निषूदनम् ॥ १८ ॥ यत्ते सुजाततचरणाम्बुरुहं स्तनेषु भीताः शनैः प्रिय दधीमहि कर्कशेषु । तेनाटवीमटसि[11] तद्व्यथते[12] न किंस्वित्कूर्पादिभि[13]र्भ्रमति धीर्भवदायुषां[14] नः ॥ १९ ॥

चिकित्सां कुर्वित्याशयेनाह—द्वयेन रहसीति । १ विशालम् । २ तथा च मुहुर्मनो मुह्यति ॥ १७ ॥ ३ अभिव्यक्तिः । ४ दुःखनिरसनीति । ५ सर्वमङ्गलरूपा । ६ अतस्त्वत्स्पृहारूढमनसां नो ईषत् किमपि मुञ्च कार्पण्यमकुर्वन्देहीत्यर्थः । ७ किं तत् स्वजनहृद्रोगाणां यदतिगोप्यं निषूदनं निवर्तकमौषधं तत्त्वमेव वेत्सीति गूढाभिप्रायम् ॥ १८ ॥ ८ अतिप्रेमधार्षिता रुदन्त्य आहुः—यदिति। ९ संमर्दनशंकिताः शनैर्धारयेम वयम्। १० कठिनेषु । ११ त्वं तु तेनाटवीमटसि । १२ ततः। १३ सूक्ष्मपाषाणादिभिः किंस्विन्न व्यथते कथं तु नाम न व्यथेत । १४ भवानेवायुर्यासां तासां नो धीर्मुह्यति ॥ १९ ॥

इति दशमस्कंधे पूर्वार्धे रासक्रीडायां गोपीगीतं नाम एकत्रिंशोऽध्यायः ॥ ३१ ॥

श्रीशुक उवाच।

इति[1] गोप्यः प्रगायन्त्यः प्रलपन्त्यश्च चित्रधा[2]।
रुरुदुः सस्वरं[3] राजन्कृष्णदर्शनलालसाः[4] ॥ १ ॥
तासामाविरभूच्छौरिः स्मयमानमुखाम्बुजः।
पीताम्बरधरः स्रग्वी साक्षान्मन्मथमन्मथः[5] ॥२॥
तं विलोक्यागतं प्रेष्ठं प्रीत्युत्फुल्लदृशोऽबलाः।
उत्तस्थुर्युगपत्सर्वास्तन्वः[6] प्राणमिवागतम् ॥३॥
काचित्कराम्बुजंशौरेर्जगृहेऽञ्जलिना मुदा।
काचिद्दधार तद्बाहुमंसे चन्दनभूषितम् ॥ ४ ॥
काचिदञ्जलिनाऽगृह्णात्तन्वी ताम्बूलचर्वितम्।
एका तदङ्घ्रिकमलं सन्तप्ता स्तनयोरधात् ॥५॥
एका भ्रुकुटिमाबद्ध्य[8] प्रेमसंरम्भविह्वला[9]।
घ्नन्तीवैक्षत्कटाक्षेपैः[10] सन्दष्टदशनच्छदा[11] ॥ ६ ॥
अपराऽनिमिषद्दृग्भ्यां[12] जुषाणा तन्मुखाम्बुजम्।
आपीतमपि नातृप्यत्सन्तस्तच्चरणं यथा ॥ ७ ॥

१ इत्येवंप्रभृति। २ अनेकधा। ३ उच्चैः। ४ अतिस्पृह यासाम् ॥१॥ ५ कामस्यापि साक्षान्मोहकः ॥ २ ॥ ६ करचरणादयः ॥ ३ ॥४॥ संहतहस्तद्वयेन ॥५॥ ८ भ्रुवं कुटिलीकृत्य। ९ प्रणयकोपावेशेन विवशा। १० कटाक्षैः परिभवास्तैस्ताडयन्तीवैक्षत। ११ दष्टाधरोष्ठा ॥ ६ ॥ १२ अनिमीलयन्तीभ्यां दृग्भ्यामापीतमपि सम्यग्दृष्टमपि पुनः पुनर्जुषाणा नातृप्यत् ॥७॥

तं काचिन्नेत्ररन्ध्रेण हृदिकृत्य निमील्य च।
पुलकाङ्ग्युपगुह्यास्ते योगीवानन्दसंप्लुता ॥८॥
सर्वास्ताः केशवालोकपरमोत्सवनिर्वृताः।
जहुर्विरहजं तापं प्राज्ञं प्राप्य यथा जनाः ॥९॥
ताभिर्विधूतशोकाभिर्भगवानच्युतो वृतः।
व्यरोचताधिकं तात पुरुषः शक्तिभिर्यथा॥१०॥
ताः समादाय कालिन्द्या निर्विश्य पुलिनं विभुः।
विकसत्कुन्दमन्दारसुरभ्यनिलषट्पदम् ॥ ११ ॥
शरच्चन्द्रांशुसन्दोहध्वस्तदोषातमः शिवम्।
कृष्णाया हस्ततरलाचितकोमलवालुकम् ॥ १२ ॥

१ हृदयं नीत्वा ॥ ८ ॥ २ ईश्वरम्। ३ मुमुक्षवः। यद्वा ब्रह्मज्ञं प्राप्य यथा संसारिणः। सौषुप्तं प्राप्य यथा विश्वतैजसावस्था जीवाः ॥ ॥ ९ ॥ ४ परमात्मा। ५ सत्त्वादिभिः। यद्वा उपासको ज्ञानबलवीर्यादिभिः। यद्वा पुरुषोऽनुशायी प्रकृत्याद्युपाधिभिर्वृतो यथाधिकं विरोचते तद्वत् ॥ १० ॥ ६ विकसत्कुन्दमन्दारैः सुरभिर्योऽनिलस्तस्मात्षट्पदा यस्मिंस्तत् ॥ ११ ॥ ७ शरच्चन्द्रांशुना समूहैर्ध्वस्तं रात्रिगतं तमो यस्मिंस्तत्। ८ अतः सुखकरम्। ९ हस्तरूपैस्तरलैरास्तृता कोमला वालुकाः यस्मिन् एवंभूतं पुलिनं ता निर्विश्य ताभिः परिवृतोऽधिकं व्यरोचतेति पूर्वेणान्वयः ॥ १२ ॥

तद्दर्शनाह्लादविधूतहृद्रुजो मनोर[1]थान्तं श्रुतयो यथा ययुः । स्वै[2]रुत्तरीयैः कुचकुङ्कुमाङ्कितैरची-क्लृ[3]पन्नासनमात्मबन्ध[4]वे ॥ १३ ॥ तत्रोपविष्टो भगवान्स ईश्वरो योगेश्वरान्तर्हृदि कल्पितासनः। चकास गोपीप[5]रिषद्गतोऽर्चितस्त्रै[6]लोक्यलक्ष्म्येक-पदं वपुर्दधत्[7] ॥ १४ ॥ सभाजयित्वा तमनङ्ग-दीपनं सहा[8]सलीलेक्षणविभ्रमभ्रुवा। संस्प[9]र्शनेना-ङ्ककृताङ्घ्रिहस्तयोः संस्तुत्य ईषत्कुपिता बभा-षिरे ॥ १५ ॥

१ मनोरथान्तमन्तं ययुः पूर्णकामा बभूवुः श्रुतयो यथेति। अयमर्थः—यथा कर्मकाण्डे श्रुतयः परमेश्वरमपश्यन्त्यस्तत्तत्कामानुबन्धै-रपूर्णा इव भवन्ति, ज्ञानकाण्डे तु परमेश्वरं दृष्ट्वा तदाह्लादपूर्णाः कामा-नुबन्धं जहति तद्वदिति । २ आप्तकामा अतिप्रेम्णा तमभजन्नित्याह। स्वैरिति। ३ रचयामासुः। ४ अन्तर्यामिणे ॥१३॥ ५ गोपीसमागतस्ताभिः संमानितः सन् शुशुभे । ६ त्रैलोक्यलक्ष्म्या एकमेव स्थानं तद्वपुः। ७ दर्शयन् ॥ १४ ॥ ८ सहासलीलेक्षणेन विलासो यस्यां तया भ्रुवोपलक्षिताः। ९ संमर्दनेन ॥ १५ ॥

गोप्य ऊचुः।

[1]भजतोऽ[2]नुभजन्त्येके एके[3] एतद्विपर्ययम्।
नो[4]भयांश्च भवन्त्येक एतन्नो ब्रूहि साधु भोः॥१६॥

श्रीभगवानुवाच।

मि[5]थो भजन्ति ये सख्यः स्वा[6]र्थैकान्तोद्यमा हि ते।
न तत्र सौहृदं धर्मः स्वार्थार्थं तद्धि नान्यथा॥१७॥
भजन्त्य[7]भजतो ये वै करुणाः पितरो यथा।
धर्मो निरपवादोऽत्र सौहृदं च सुमध्यमाः॥१८॥
भ[8]जतोऽपि न वै केचिद्भजन्त्यभजतः कुतः।
आत्मारामा ह्याप्तकामा अकृतज्ञा गुरुद्रुहः॥१९॥

१ तत्र भगवतोऽकृतज्ञतां तद्वचनेनैवापादयितुकामा गूढाभिप्राया लोकवृत्तान्तमिव पृच्छन्ति—भजत इति। भजतः प्राणिनः। २ अनन्तरं केचिद्भजनानुसारेण भजन्ति। ३ केचिदेतद्विपर्ययं यथा भवति तथा तद्भजनानपेक्षमभजतोऽपि भजन्ति। ४ अन्ये तु नोभयानिति॥१६॥ ५ विदिताभिप्राय उत्तरमाह—मिथो इति। हे सख्यः उपकारप्रत्युपकारतया ये मिथो भजन्ति तेऽन्यं न भजन्ति किन्त्वात्मानमेव। ६ कुतो यस्मात् स्वार्थ एवैकान्त उद्यमो येषां ते। तत्र च न सौहृदमतो न सुखं नच धर्मो दृष्टोद्देशाद्गोमहिष्यादिभजनवदित्यर्थः॥१७॥ ७ ये त्वभजतो भजन्ति ते द्विविधाः करुणाः स्निग्धाश्च। तत्र तु यथाक्रमं धर्मकामौ भवत इत्याह—भजन्त्यभजत इति॥१८॥ ८ तृतीयप्रश्नोत्तरमाह—भजतोऽपीति। अयमर्थः। ते तु चतुर्विधाः। एके आत्मारामा अपरागदृशः।

[1]नाहं तु सख्यो भजतोऽपि जन्तून्भजाम्यमीषामनुवृत्तिवृत्तये। [2]यथाऽधनो लब्धधने विनष्टे [3]तच्चिन्तयाऽन्यन्[4]निभृतो न वेद ॥२०॥ एवं मदर्थोज्झित[5]लोक[6]वेद[7]स्वानां हि वो मय्यनुवृत्तयेऽबलाः। मया [8]परोक्षं [9]भजता [10]तिरोहितं मासूयितुं मार्हथ [11]तत्प्रियं [12]प्रियाः ॥ २१ ॥ [13]न पारयेऽहं [14]निरवद्यसंयुजां स्व[15]साधुकृत्यं [16]विबुधायुषापि वः। या

केचिदाप्तकामा विषयदर्शिनोऽपि पूर्णकामत्वेन भोगेच्छारहिताः। अन्येऽकृतज्ञ मूढाः। अन्ये तु गुरुद्रुहोऽतिकठिनाः। 'स पिता यस्तु पोषकः' इति न्यायादु पकर्ता गुरुतुल्यस्तस्मै द्रुह्यन्तीति तथा ॥१९॥ १अत्र चरमकोटिगतमात्मा मत्वाऽक्षिसंकोचैः परस्परं गूढस्मितमुखीस्ता दृष्ट्वाह—नाहमिति। हे सख्य अहं तेषां मध्ये न कोऽपि किन्तु परमकारुणिकः परमसुहृच्च। कथम्। अमी भजतामनुवृत्तिवृत्तये निरन्तरध्यानप्रवृत्त्यर्थं तान्न भजामि। २ एतत्सदृष्टान्त माह—यथेति। ३ धनचिन्तया। ४ पूर्णः क्षुत्पिपासादि न वेद ॥ २०॥ ५ युक्तायुक्तपरीक्षणात्। ६ धर्माधर्मपरीक्षणात्। ७ ज्ञातयश्च स्नेहत्यागा याभिस्तासाम्। ८ अदर्शनं यथा भवति तथा। ९ युष्मत्प्रेमालापा शृण्वतैव। १० अन्तर्धानेन स्थितम्। ११ तस्मान्मां दोषारोपेण द्रष्टुं यू न योग्याः स्थ। १२ हे सख्यः॥२१॥ १३ आस्तामिदं परमार्थं तु शृणुतेत्याह—नेति। न शक्नोमि। १४ निरवद्यः संयोगो यासाम्। १५ स्वीयं साधुकृत्य प्रत्युपकर्तुम्। १६ चिरकालेनापि।

माऽभजन्दुर्जरगेहशृङ्खलाः संवृश्च्य तद्वः प्रति-
यातु साधुना ॥ २२ ॥

१ अजरा गेहशृंखलाः । २ निःशेषं छित्त्वा मामभजन् । ३ मम चित्तं तु बहुषु प्रेमयुक्ततया नैकनिष्ठम् । तस्माद्युष्माकम् । ४ प्रतिकृतं भवतु। ५ वः साधुकृत्येन। युष्मत्साधुकृत्येन युष्मत्सौशील्येनैव ममानृण्यम् । नतु मत्कृतप्रत्युपकृतेनेत्यर्थः ॥२२॥

इति श्रीमद्भागवते दशमस्कन्धे पूर्वार्धे रासक्रीडायां गोपीसान्त्वनं नाम द्वात्रिंशोऽध्यायः ॥ ३२ ॥

---

## श्रीशुक उवाच।

इत्थं भगवतो गोप्यः श्रुत्वा वाचः सुपेशलाः ।
जहुर्विरहजं तापं तदङ्गोपचिताशिषः ॥ १ ॥
तत्रारभत गोविन्दो रासक्रीडामनुव्रतैः ।
स्त्रीरत्नैरन्वितः प्रीतैरन्योन्याबद्धबाहुभिः ॥२॥
रासोत्सवः संप्रवृत्तो गोपीमण्डलमण्डितः ।
योगेश्वरेण कृष्णेन तासां मध्ये द्वयोर्द्वयोः ।
प्रविष्टेन गृहीतानां कण्ठे स्वनिकटं स्त्रियः ॥३॥

६ कृष्णकरचरणाद्यवयवैरुपचिताः समृद्धा आशिषो यासाम् ॥ १ ॥ ७ बहुनर्तकीयुक्तनृत्यविशेषस्य क्रीडाम् । ८ अन्योन्यं संग्रथिता बाहवो यैस्तैः सह ॥ २ ॥ ९ तत्साहित्यमभिनयेन दर्शयति–रासोत्सव इत्यक्षर-

स्तुष्टयाधिकेन सार्धेन ॥ तासां मण्डलरूपेणावस्थितानां द्वयोर्द्वयोर्मध्ये-प्रविष्टेन तेनैव कण्ठे गृहीतानामालिङ्गितानाम् । कथंभूतेन । यं सर्वाः स्त्रियः स्वनिकटं मामेवाश्लिष्टवानिति मन्येरंस्तेन। एतदर्थं द्वयोर्द्वयोर्मध्ये प्रविष्टेनेत्यर्थः । नन्वेकस्य कथं तथा प्रवेशः । सर्वसन्निहितत्वे वा कुतः स्वैकनिकटत्वाभिमानस्तासामित्यत उक्तम् । योगेश्वरेणेति । अचिन्त्यशक्तिनेत्यर्थः ॥ ३ ॥

यं मन्येरन्नभस्तावत्[1]विमानशतसंकुलम्[2] ।
दिवौकसां सदाराणामौत्सुक्यापहृतात्मनाम्॥४॥
ततो दुन्दुभयो नेदुर्निपेतुः पुष्पवृष्टयः ।
जगुर्गन्धर्वपतयः सस्त्रीकास्तद्यशोऽमलम्[3] ॥ ५ ॥
वलयानां नूपुराणां किंकिणीनां च योषिताम् ।
सप्रियाणाम्[4]अभूच्छब्दस्तुमुलो[5] रासमण्डले ॥ ६ ॥
तत्रातिशुशुभे ताभिर्भगवान्देवकीसुतः ।
मध्ये मणीनां हैमानां महामरकतो[6] यथा ॥ ७ ॥
पादन्यासै[7]र्भुज[8]विधुतिभिः सस्मितैर्भ्रूविलासै-

१ तत्क्षणमेव । २ संकीर्णं नभो बभूव ॥ ४ ॥ ३ कृष्णस्यामलं यशो जगुः ॥५॥ ४ कृष्णसहितानाम्। ५ संकीर्णः॥६॥ ६ नीलमणिरिव ताभिः सुवर्णवर्णाभिराश्लिष्टाभिः शुशुभे ॥७॥ ७ स यथा ताभिः शुशुभे तथा ताभिश्च तेन विरेजुरित्याह—पादन्यासैरिति । ८ करचालनैः ।

भज्यन्[1]मध्यैश्चलत्[2]कुचपटैः कुण्डलैर्गण्ड[3]लोलैः ।
स्विद्यन्मुख्य[4]ः कबर[5]रशनाग्रन्थयः कृष्णवध्वो
गायन्त्यस्तं तडित[6] इव ता मेघचक्रे विरेजुः॥८॥
उच्चैर्जगुर्नृत्यमाना[7] रक्तकण्ठ्यो[8] रतिप्रियाः ।
कृष्णाभिमर्शमुदिता[9] यद्गीतेनेदमावृतम्[10] ॥ ९ ॥
काचित्समं मुकुन्देन स्वरजाती[11]रमिश्रिता[12]ः ।
उन्निन्ये[13] पूजिता[14] तेन[15] प्रीयतां साधु साध्विति ।
तदेव[16] ध्रुवमु[17]न्निन्ये तस्यै मानं च बह्वदात्॥१०॥
काचिद्[18]रासपरिश्रान्ता पार्श्वस्थस्य गदाभृतः ।
जग्राह बाहुना स्कन्धं श्लथद्[19]वलयमल्लिका ॥११॥
तत्रैकांसगतं बाहुं कृष्णस्योत्पल[20]सौरभम् ।

१ भज्यमानैर्मध्यैः । २ चलद्भिः कुचैश्च पटैश्च । ३ गण्डेषु चञ्चलैः । ४ स्वेदमुद्गिरन्ति मुखानि यासाम् । ५ कबरेषु रशनासु च ग्रन्थयो दृढा यासां यद्वा अग्रन्थयः शिथिलग्रन्थय इत्यर्थः । ६ तत्र नानामूर्तिः कृष्णो मेघचक्रमिव तास्तु बहुविधास्तडित इव स्वेदस्तुषार इव गीतं गर्जितमिवेति यथासम्भवमूह्यम् ॥ ८ ॥ ७ तृष्यन्त्यः । ८ नानारागैरनुरंजितकण्ठ्यः । ९ कृष्णस्य स्पर्शेन मुदिताः । १० विश्वम्॥९॥ ११ षड्जादिस्वरालापगतीः। १२ कृष्णोन्नीताभिरसंकीर्णाः। १३ उन्नीतवती। १४ संमानिता। १५ प्रीयमाणेन। १६ जात्युन्नयनमेव। १७ ध्रुवाख्यं तालविशेषं कृत्वा ॥१०॥ १८ एवं नृत्यगीतादिना श्रीकृष्णसंमानितानां तासामतिप्रीतिविलसितं वृत्तमाह–काचिदिति । १९ श्लथन्ति वलयानि मल्लिकाश्च यस्याः सा ॥ ११ ॥ २० उत्पलस्य सौरभमिव

चन्दनालिप्तमाघ्राय हृष्टरोमा चुचुम्ब ह ॥१२॥
कस्याश्चिन्नाट्य[1]विक्षिप्तकुण्डलत्विषमण्डितम् ।
ग[2]ण्डं गण्डे सन्द[3]धत्या अदात्ताम्बूलचर्वितम् ॥१३॥
नृत्यन्ती गायती काचित्कू[4]जन्नूपुरमेखला ।
पार्श्वस्थाच्युतहस्ताब्जं श्रान्ताऽधात्स्तनयोःशिवम्
गो[5]प्यो लब्ध्वाऽच्युतं कान्तं श्रियएकान्तवल्लभम् ।
गृहीतकण्ठ्यस्तद्दोर्भ्यां गायन्त्यस्तं विजह्रिरे॥ १५॥

सौरभं यस्य तं बाहुम् ॥ १२ ॥ १ नृत्येन चञ्चलयोः कुण्डलयोस्त्विषा मण्डितम्। २ कपोलम्। ३ तथाभूते स्वगण्डे संयोजयत्याः ॥१३ ॥ ४ कूजती नूपुरे मेखला च यस्याः सा ॥ १४ ॥ ५ एवमन्या अपि गोप्यो यथायथं नानाविभ्रमैर्विजह्रुरित्याह—गोप्य इति ॥ १५ ॥

[6]कर्णोत्पलालकविटङ्ककपोलघर्मवक्त्रश्रियो वलय-
नूपुरघोष[7]वाद्यै[8]ः । गोप्यः समं भगवता ननृतुः
स्वकेश[9]स्रस्तस्रजो [10]भ्रमरगायकरासगोष्ठ्याम् ॥१६॥

६ तत्र वादकेषु गायकेषु गन्धर्वकिन्नरादिषु रसावेशेन मुह्यत्सु नृत्यत्सु चान्यामेव वाद्यादिसम्पत्तिं दर्शयन्रासंसंभ्रममाह—कर्णोत्पलेति। कर्णोत्पलैश्चालकालङ्कृतैः कपोलैश्च घर्मैश्च वक्त्रेषु शोभा यासां ताः। ७ किङ्किणीभिः। ८ वादित्रैः। ९ स्वकेशेभ्यः स्रस्ताः स्रजो यासां ताः एतेन तालगतिसंतुष्टाः केशाः सशिरःकम्पं पादेषु पुष्पवृष्टिमिवाकुर्वन्नित्युत्प्रेक्षितम्। भगवता सह ननृतुः। क। १० भ्रमरा एव गायका यस्यां राससभायाम् ॥१६॥

एवं[1] परिष्वङ्गकराभिमर्शस्निग्धेक्षणोद्दामविलासहासैः । रेमे रमेशो व्रजसुन्दरीभिर्यथाऽर्भकः[2] स्वप्रतिबिम्बविभ्रमः ॥ १७ ॥ तद[3]ङ्गसङ्गप्रमुदाकुलेन्द्रियाः केशान्[4] दुकूलं कुचपट्टिकां वा । नाञ्जः[5] प्रति[6]व्योढुमलं[7] व्रजस्त्रियो विस्रस्त[8]मालाभरणाः कुरूद्वह ॥ १८ ॥ कृष्ण[9]विक्रीडितं वीक्ष्य मुमुहुः खेचरस्त्रियः । कामार्दिताः शशाङ्क[10]श्च सगणो विस्मितोऽभवत् ॥ १९ ॥

१ यथा गोप्यो नानाविभ्रमैर्भगवता सह विजह्रुरेवं भगवानपि स्वविलासै स्ताभिः सह रेमे इत्याह—एवमिति । २ तद्विलासानभिभूतस्यैव रतौ दृष्टान्तः। यथाऽर्भक इति । स्वप्रतिबिम्बैः क्रीडा यस्य स इव । अनेनैतद्दर्शितम् स्वीयमेव सर्वं कलाकौशलं सौगन्ध्यलावण्यमाधुर्यादि च तासु संचार्य ताभि सह रेमे यथार्भकः स्वप्रतिबिम्बैरिति ॥ १७ ॥ ३ तास्तु भगवद्विलासैराकुला बभूवुरित्याह—तदङ्गेति । तस्याङ्गसङ्गेन प्रकृष्टा प्रीतिस्तयाऽवशानीन्द्रियाणि यासां ताः । ४ विश्लथबन्धान्केशादीन् । ५ अञ्जसा । ६ यथापूर्वं धर्तुम् । ७ न समर्था बभूवुः । ८ विस्रस्ता माला आभरणानि च यासां ताः ॥ १८ ॥ ९ न केवलं ता एवाकुलेन्द्रियाः किन्तु देव्योऽपीत्याह—कृष्णेति । १० किंच शशाङ्कश्चेति । अनेनैतत्सूचितम् । शशांकेन विस्मितेन गतौ विस्मृतायां ततः प्राक्तनाः सर्वेऽपि ग्रहास्तत्र तत्रैव तस्थुस्ततश्चातिदीर्घासु रात्रिषु यथासुखं विजह्रुरिति ॥ १९ ॥

[1]कृत्वा तावन्तमात्मानं याव[2]तीर्गोपयोषितः ।
रेमे स भगवांस्ताभिरात्मारामोऽपि लीलया ।२०।
[3]तासामतिविहारेण श्रान्तानां वदनानि सः ।
प्रामृजत्करुणः प्रेम्णा शन्तमेनाङ्गपाणिना ॥२१॥
[4]गोप्यः [5]स्फुरत्पुरटकुण्डलकुन्तलत्विड्गण्डश्रिया
[6]सुधितहासनिरीक्षणेन । मानं दधत्य [7]ऋषभस्य
जगुः [8]कृतानि पुण्यानि तत्[9]कररुहस्पर्शप्रमोदाः ॥२२॥
[10]ताभिर्युतः श्रममपोहितुम[11]ङ्गसङ्गघृष्टस्रजः [12]सकुच-
कुङ्कमरञ्जितायाः । [13]गन्धर्वपाऽलिभिरनुद्रुत आवि-

१ किंच कृत्वेति । अयं भावः "कात्यायनि महामाये महायोगिन्यधीश्वरि । नन्दगोपसुतं देवि पतिं मे कुरु ते नमः" इति प्रत्येकं ताभिः प्रार्थनाद्भगवताऽपि "यातावला व्रजं सिद्धा मयेमा रंस्यथ क्षपाः" इति तथैव प्रतिश्रुतत्वात्तावन्तमात्मानं कृत्वा रेमे । २ यावत्यः ॥ २० ॥ ३ कृपातिशयमाह—तासामिति ॥ २१ ॥ ४ ततोऽतिहृष्टानां गोपीनां चरितमाह—गोप्य इति । ५ स्फुरत्सुवर्णकुण्डलानां कुन्तलानां च त्विषा गण्डेषु या श्रीस्तया । ६ अमृतायितेन हाससहितेन निरीक्षणेन च । ७ कृष्णस्य । ८ तत्कृतानि । ९ तस्य नखैः स्पर्शेन प्रमोदो यासां ताः ॥ २२ ॥ १० अथ जलकेलिमाह-ताभिरिति । ११ तासामङ्गसङ्गे संमर्दिताया मालायाः । १२ अत एव तासां कुचकुङ्कुमेन रञ्जितायाः सम्बन्धिभिः । १३ गन्धर्वपा

शद्वाः[1] श्रान्तो गजीभिरिभराडिव भिन्नसेतुः[2]॥२३॥
सोऽम्भस्यलं युवतिभिः परिषिच्यमानः प्रेम्णेक्षितः प्रहसतीभिरितस्ततोऽङ्ग। वैमानिकैः कुसुमवर्षिभिरीड्यमानो रेमे स्वयं स्वरति[3]रत्र[4] गजेन्द्रलीलः॥ २४॥ ततश्च[5] कृष्णोपवने[6] जल[7]स्थलप्रसूनगन्धानिलजुष्टदिक्तटे। चचार भृङ्गप्रमदा[8]गणावृतो यथा मदच्युद्द्विरदः करेणुभिः २५॥
एवं[9] शशाङ्कांशुविराजिता निशाः स[10] सत्यकामो[11]ऽनुरता[12]बलागणः। सिषेव आत्मन्यवरुद्धसौरतः सर्वाः[13] शरत्[14]काव्यकथारसाश्रयाः॥ २६॥

इव गायन्तो येऽलयस्तैरनुगतः स कृष्णः। १ वाः उदकमाविशत्। २ वप्रः स्वयं चातिक्रान्तलोकवेदमर्यादः ॥ २३ ॥ ३ आत्मारामोऽपि। ४ गोपीमण्डले जले वा ॥ २४ ॥ ५ स्थलजलक्रीडे दर्शिते वनक्रीडां दर्शयति—ततश्चेति। ६ यमुनाया उपवने। ७ जलस्थलप्रसूनानां सगन्धवातेन जुष्टा दिगन्ता यस्मिन्। यद्वा दिशश्च तटं स्थलं च यस्मिन्। ८ भृङ्गानां प्रमदानां च गणैरावृतः ॥ २५ ॥ ९ रासक्रीडां निगमयति—एवमिति। १० कृष्णः। १२ सत्यसंकल्पः। १२ अनुरागिस्त्रीकदम्बस्थः। १३ निशः। १४ शरदि भवाः काव्येषु कथ्यमानानां रसानामाश्रयभूताः। एवमप्यात्मन्येवावरुद्धश्च रमधातुर्नतु स्खलितो यस्येति कामजयोक्तिः ॥२६॥

राजोवाच।

संस्थापनाय धर्मस्य प्रशमायेतरस्य च।
अवतीर्णो हि भगवानंशेन जगदीश्वरः ॥ २७ ॥
स कथं धर्मसेतूनां वक्ता कर्ताऽभिरक्षिता।
प्रती[1]पमाचरद्ब्रह्मन्पर[2]दाराभिमर्शनम् ॥ २८ ॥
आ[3]प्तकामो यदुपतिः कृतवान्वै जुगुप्सितम्।
किमभिप्राय एतं नः संशयं छिन्धि सुव्रत ॥२९॥

श्रीशुक उवाच।

ध[4]र्मव्यतिक्रमो दृष्ट ईश्वराणां च सा[5]हसम्।
तेजस्विनां न दोषाय वह्नेः सर्वभुजो यथा ॥३०॥
नै[6]तत्समाचरेज्जातु मनसापि ह्य[7]नीश्वरः।
विनश्यत्याचरन्मौढ्याद्यथा रु[8]द्रोऽब्धिजं विषम् ३१

॥ २७ ॥ १ अधर्मम्। २ न चेदमधर्ममात्रं कलंजभक्षणादिव किंतु महासाहसमित्याह—परेति ॥ २८ ॥ ३ आप्तकामस्य नायमधर्म इति चेद्यद्येवं कामाभावान्निन्दितं केनाभिप्रायेण कृतवानिति पृच्छति—आप्तकाम-इति ॥२९॥ ४ परमेश्वरे कैमुतिकन्यायेन परिहर्तुं सामान्यतो महतां वृत्तमाह—धर्मव्यतिक्रम इति। ५ साहसं च दृष्टम् प्रजापतीन्द्रसोमविश्वामित्रादीनाम् तच्च तेजस्विनां न दोषाय भवति ॥ ३० ॥ ६ तर्हि 'यद्यदाचरति श्रेष्ठः' इति न्यायेनान्योऽपि कुर्यादित्याशङ्क्याह—नैतदिति। ७ देहादिपरतन्त्रः। ८ रुद्रव्यतिरिक्तो विषं भक्षयन् ॥ ३१ ॥

ई[1]श्वराणां वचः सत्यं तथैवाचरितं क्वचित्[2] ।
तेषां यत्[3]स्ववचोयुक्तं बुद्धिमांस्तत्समाचरेत् ॥ ३२ ॥
कु[4]शलाचरितेनैषामिह स्वार्थो न विद्यते ।
विपर्ययेण वाऽनर्थो निरहंकारिणां प्रभो ॥ ३३ ॥
कि[5]मुताखिलसत्त्वानां तिर्यङ्मर्त्यदिवौकसाम् ।
ईशितुश्चेशितव्यानां कु[6]शलाकुशलान्वयः ॥ ३४ ॥
य[7]त्पादपङ्कजपरागनिषेवतृप्ता यो[8]गप्रभावविधुता-
खिलकर्मबन्धाः । स्वैरं चरन्ति मुनयोऽपि न
न[9]ह्यमानास्तस्येच्छयात्तवपुषः कुत एव बन्धः ३५
गोपी[10]नां तत्पतीनां च सर्वेषामेव देहिनाम् ।
योऽन्तश्चरति सोऽध्य[11]क्षः [12]क्रीडनेनेह देहभाक् ॥ ३६ ॥

१ कथं तर्हि सदाचारस्य प्रामाण्यमत आह–ईश्वराणामिति । २ सत्यम् । ३ अतस्तेषां वचसा यद्यदविरुद्धं तत्तदेवाचरेत् ॥ ३२ ॥ ४ ननु तर्हि तेऽपि किमेवं साहसमाचरन्ति तत्राह–कुशलेति । प्रारब्धकर्मक्षपणमात्रमेव तेषां कृत्यं नान्यदित्यर्थः ॥ ३३ ॥ ५ प्रस्तुतमाह–किमुतेति । ६ युक्तायुक्तसम्बन्धो न विद्यते इति किं पुनर्वक्तव्यमित्यर्थः ॥ ३४ ॥ ७ एतदेव स्फुटयति । यत्पादाब्जरजसि सेवा येषां ते च ते तृप्ता भक्ता इत्यर्थः । ८ ज्ञानिनश्च । ९ बन्धनमप्राप्तवन्तः ॥ ३५ ॥ १० परदारत्वं गोपीनामङ्गीकृत्य परिहृतमिदानीं भगवतः सर्वान्तर्यामिणः परदारसेवा नाम न काचिदित्याह–गोपीनामिति । ११ बुद्ध्यादिसाक्षी । १२ न त्वस्मदादितुल्यो येन दोषः स्यादिति ॥ ३६ ॥

अनु[1]ग्रहाय भूतानां मानुषं देहमाश्रितः ।
भजते तादृशीः क्रीडा याः श्रुत्वा तत्परो भवेत्३७
ना[2]सूयन्खलु कृष्णाय मोहितास्तस्य मायया ।
मन्यमानाः स्वपार्श्वस्थान्स्वान्स्वान्दारान्व्रजौ-
कसः॥३८॥ ब्रह्मरात्र उपा[3]वृत्ते वासुदेवानुमोदिताः।
अनिच्छन्त्यो ययुर्गोप्यः स्वगृहान्भगवत्प्रियाः३९
वि[5]क्रीडितं व्रजवधूभिरिदं च विष्णोः श्रद्धान्वि-
तोऽनुशृणुयादथ वर्णयेद्यः । भक्तिं परां भगवति
प्रतिलभ्य कामं हृद्रोगमाश्वपहिनोत्यचिरेणधीरः

इति दशमस्कन्धे पूर्वार्धे रासक्रीडायां त्रयस्त्रिंशोऽध्यायः ॥ ३३ ॥

इति रासक्रीडा पञ्चाध्यायी सम्पूर्णा ॥

---

१ नन्वेवं चेदाप्तकामस्य निन्दिते कुतः प्रवृत्तिरित्यत आह—अनुग्रहायेति। शृङ्गाररसाकृष्टचेतसोऽतिबहिर्मुखानपि स्वपरान्कर्तुमिति भावः ॥ ३७ ॥ २ नन्वन्येऽपि भिन्नाचाराः स्वचेष्टितमेवमेवेति वदन्ति तत्राह-नासूयन्निति । एवं एवम्भूतैश्वर्याभावे तथा कुर्वतः पापा ज्ञेया इति भावः ॥३८॥ ३ ब्राह्मे मुहूर्ते। ४ प्राप्ते सति ॥ ३९ ॥ ५ भगवतः कामविजयरूपरासक्रीडाश्रवणादेः कामविजयमेव फलमाह—विक्रीडितमिति। ६ अचिरेण धीरः सन्कामं शीघ्रं परित्यजति इति ॥ ४० ॥ इति रासक्रीडा पञ्चाध्यायी समाप्ता। कृष्णार्पणमस्तु ।

# गोपीयुगलगीता ।



श्रीशुक उवाच ।

गोप्य[1]ः कृष्णे वनं याते तमनुद्रुतचेतसः ।
कृष्णलीलाः प्रगायन्त्यो निन्युर्दुः[2]खेन वासरान् ॥ १ ॥

गोप्य ऊचुः ।

वा[3]मबाहुकृतवामकपोलो वल्गि[4]तभ्रुरधरार्पितवे-
णुम् । कोमलाङ्गुलिभिराश्रित[5]मार्गं गोप्य ईरयति
य[6]त्र मुकुन्दः ॥ २ ॥ व्योम[7]यानवनिताः सह[8]
सिद्धैर्वि[9]स्मितास्तदुप[10]धार्य सलज्जाः । का[11]ममा-
र्गणसमर्पितचित्ताः क[12]श्मलं ययुरपस्मृ[13]तनीव्यः
॥ ३ ॥ ह[14]न्त चित्रमबलाः शृणुतेदं हारहास उर[15]-

१ एवं रात्रिषु कृष्णेन स्वैरमभिरमितानां दिवा तद्विरहितानामनुगीतेन दिननिस्तारप्रकारमाह—गोप्य इति । २ कृच्छ्रेण ॥ १ ॥ ३ " वामबाहुकृत " इत्यादीनि द्वादशयुगलानि । वामदोर्मूलार्पितवामकपोलः । ४ नर्तितभ्रुः । ५ आश्रिताः सप्तस्वरच्छिद्राणि यस्य तं वेणुम् । ६ यदा वादयति ॥ २ ॥ ७ तदा सिद्धाङ्गनाः । ८ स्वपतिभिः सह वर्तमाना अपि । ९ प्रथमम् । १० तद्वेण्वीरणमाकर्ण्य । ११ ततः कामातुराः परवश्या इत्यर्थः । १२ मोहम् । १३ तत्र लिङ्गम् । " अत एवंभूतस्य कृष्णस्य विरहं कथं सहाम इति सर्वत्र वाक्यशेषः " ॥ ३ ॥ १४ हे । १५ उरसि

सिस्थिरविद्युत्। नन्दसूनुरयमार्तजनानां नर्मदो यर्हि[1] कूजितवेणुः ॥ ४ ॥ वृन्दशो[2] व्रजवृषा मृगगावो वेणुवाद्यहृतचेतस आरात्[3]। दन्त[4]दष्टकवला धृत[5]कर्णा नि[6]द्रिता लिखित[7]चित्रमिवासन् ॥ ५ ॥ बर्हिण[8]स्तबकधातु[9]पलाश[10]ैर्बद्धमल्ल[11]परिबर्हविडम्बः। कर्हिचित्सबल आलि[12] सगोपैर्गाः समाह्वयति[13] यत्र मुकुन्दः ॥ ६ ॥ तर्हि[14] भग्नगतयः सरितो वै तत्पदाम्बुज[15]रजोऽनिलनीतम्। स्पृहयती[16]र्वयम्[17]िवाबहुपुण्याः प्रेम[18]वेपितभुजाः स्तिमि-

स्थिरा विद्युदिव लक्ष्मीर्यस्य सः। १ यदा नादितवेणुर्भवति ॥ ४ ॥ २ तदा व्रजे वृषा मृगा गावश्च वेणुवाद्येन हृतचित्ताः सन्तः। ३ दूरादेव। ४ दन्तैर्दष्टग्रासाः। ५ उत्तम्भितकर्णाः। ६ निद्रिता इव। ७ चित्रार्पिता इव चासन् अविदुषां तिरश्चामिदमतिचित्रमित्यर्थः ॥ ५ ॥ ८ किंच अचेतनासु सरित्सु तदतीव चित्रमित्याहुः—मयूरपिच्छाः। ९ गैरिकादयः। १० पल्लवाश्च तैः। ११ बद्धश्चासौ मल्लानां परिकरस्तमनुकरोतीति तथा। १२ हे सखि। १३ सगोपरामो मुकुन्दो गा यदा सम्यगाह्वयति ॥ ६ ॥ १४ तदा तद्ध्वनिश्रवणात्। १५ वायूपनीतं तत्पादाब्जरजः। १६ स्पृहयन्त्य इव भग्नगतयो नद्यो वै निश्चितम्। १७ वयमिव ता अप्यहृबपुण्या यतो न प्राप्नुवन्ति। १८ केवलं

[1]तापः ॥ ७ ॥ अनु[2]चरैः समनुवर्णितवीर्य [3]आदि-
पूरुष इवा[4]चलभूतिः । वनचरो गिरितटेषु चरन्ती-
[5]र्वेणुनाऽऽह्वयति गाः स यदा हि ॥ ८ ॥ व[6]ने-
लतास्तरव आत्मनि विष्णुं व्यञ्ज[7]यन्त्य इव पु-
ष्पफलाढ्याः । प्रणतभारविटपा मधुधाराः प्रेम-
हृष्टतनवः ससृजुः [8]स्म ॥ ९ ॥ [9]दर्शनीयतिलको
[10]वनमालादिव्यगन्धतुलसीमधुमत्तैः ॥ अलिकु-
लैर[11]लघु गीत[12]मभीष्ट[13]माद्रियन्[14]यर्हि सन्धितवेणुः
॥ १० ॥ [15]सरसि सारसहंसविहङ्गाश्चारुगीतहृत-

प्रेमवेपिततरङ्गात्मभुजाः । १ निश्चलजलाः । गोप्योऽपि लोचनयोस्तिमि-
तजला भवातीति ॥ ७ ॥ २ स्थावरेष्वप्यतिचित्रं दृश्यते इत्याहुः ।
गोपैर्देवैर्वा । ३ मुग्धानां वाक्यमादिपूरुष इवेति । ४ निश्चलश्रीः ।
५ तत्तन्नाम्ना गानेन ॥ ८ ॥ ६ तदा वनगता लताः स्वस्मिन् विष्णुं
प्रकाशमानम् । ७ सूचयन्त्य इव मधुधारा ववृषुः । ८ विस्मये तरवश्च
तत्पतीनामपि तथैवानन्द इति भावः । एतानि विष्णुव्यक्तिलिङ्गानि ॥ ९ ॥
९ किंच सरसि कमलवनेषु विहरतां पक्षिणामपि मनस आकर्षणं तद्गीतं
किं पुनरन्येषामित्याहुः । साधुतिलकः । अतिसुन्दरो वा । १० वनमालासु
दिव्यगन्धायास्तुलस्या मधुना मत्तैर्भ्रमरवृन्दैः। ११ उच्चैः । १२ अनुकूलम् ।
१३ आदरेण गृह्णन् । १४ यदाधरे सन्धितवेणुर्भवति ॥ १० ॥
१५ तर्हि ये सरसि सारसा हंसा अन्ये च विहङ्गास्ते मनोहरगीतेनाकृष्ट-

चेतस एत्य[1]। हरिम्[2]उपासत ते यतचित्ता हन्त[3]
मीलितदृशो धृतमौनाः ॥ ११॥ स[4]हबलः स्र[5]गव-
तंसविलासः सा[6]नुषु क्षितिभृतो व्रज[7]देव्यः। हर्षय-
[8]न्यर्हि वेणुरवेण जात[9]हर्ष [10]उपरम्भति विश्वम्॥ १२॥
[11]महदतिक्रमणशङ्कितचेता मन्दमन्दमनुगर्जति
मेघः। सुहृद[12]मभ्यवर्षत्सुमनोभिश्छायया च विद-
धत्प्रत[13]पत्रम् ॥ १३॥ विविध[14]गोपचरणेषु विदग्धो
वे[15]णुवाद्य उरुधा निज[16]शिक्षाः। तव सुतः स[17]ति
यदाऽधरबिम्बे दत्त[18]वेणुरनयत्स्वर[19]जातीः ॥ १४ ॥

चेतसः। १ तत आगत्य। २ हरिमभजन्त। उपविविशुर्वा। ३ हन्तेति विषादे॥ ११॥ ४ मेघोऽपि हरिं सेवत इत्याहुः। सहबल इति। ५ स्रग्भिर्निर्मितकर्णभूषणाभ्यां विलासो यस्य। ६ गिरेस्तटेषु वर्तमानः। ७ हे गोप्यः। ८ विश्वं हर्षयन्। ९ स्वयं जातहर्षः। १० निनादयति नादेन पूरयतीत्यर्थः॥ १२॥ ११ तदा कृष्णस्यातिक्रमणे शङ्कितचेतो मेघः पुरतो न याति न चोच्चैर्गर्जति। किन्तु तत्रैव स्थितः सन्वेणुरवमनु मन्दं मन्दं गर्जति। १२ किंच विश्वार्त्तिहरणादिसाम्यात्सुहृदं कृष्णं सुमनोभिरभ्यवर्षत्। अदृश्यैर्देवैः क्रियमाणं कुसुमवर्षं मेघे कल्पयित्वोक्तम्। तुषारो वा कुसुमतया कल्पितः। स एव वा देवतारूपोऽभ्यवर्षदिति। १३ छत्रं तच्छायया कुर्वन्नित्यर्थः॥ १३ ॥ १४ अपि च महदेतदाश्चर्यमित्याहुः। विविधेति। नानागोपक्रीडासु १५ वेणुवाद्ये विषये। १६ निजैव शिक्षा यासु ताः। स्वोत्प्रेक्षिता नत्वन्यतः श्रुता इत्यर्थः। १७ हे यशोदे। १८ उन्नीतवान्। १९ निषादऋषभादिस्वरालापभेदान्। १४।

स[1]वनश[2]स्तदुप[3]धार्य सुरेशाः शक्रशर्वपरमेष्ठिपुरोगाः
कवय [4]आनतकन्धरचित्ताः कश्मलं ययुरनि[5]श्चित-
तत्त्वाः ॥ १५ ॥ नि[6]जपदाब्जदलैर्ध्वजवज्रनीरजा-
ङ्कुशविचित्रल[7]ललामैः । व्रजभुवः शमयन्[8]खुरतोदं
व[9]र्ष्मधुर्यगतिरीडितवेणुः ॥१६॥ व्रजति ते[10]न वयं
सविलासवीक्षणार्पितमनोभववे[11]गाः । कु[12]जगतिं
गमिता न विदामः [13]कश्मलेन कवरं वसनं वा
॥ १७ ॥ मणि[14]धरः क्वचि[15]दागणयन्गा मालया
दयितग[16]न्धतुलस्याः । प्र[17]णयिनोऽनुचरस्य [18]कदांसे
प्रक्षिपन्भुजमगायत यत्र ॥ १८ ॥

१ मन्द्रमध्यमतारभेदेन । २ तत्ताः स्वरजातीः । ३ समाकर्ण्य । ४ यतो गीतध्वनिरागतस्ततश्चानता कधन्रा चित्तं च येषां ते कोविदा अपि । ५ न निश्चितं तत्त्वं तद्भेदो यैस्ते मोहं ययुः ॥ १५ ॥ ६ अस्माकं तु मोहं किं ब्रूम इत्याहुः । निजपदेति । ७ ध्वजादिचिह्नयुतैः । ८ खुराक्रमणव्यथाम् । ९ देहेन धुर्यो गजस्तद्वद्गतिर्यस्य स कृष्णो वादितवेणुः सन्यद्व्रजति ॥ १६ ॥ १० निमित्तेन । ११ कामातुरा वयम् । १२ वृक्षगतिं प्रापिताः सत्यः । १३ मोहेन कवरादि न विदामः ॥ १७ ॥ १४ गोगणनार्थं प्रथितान्मणीन्धारयतीति । १५ क्वचिद्देशे एतैर्मणिभिर्गाः समन्ताद्गणयन् । १६ सुगन्धतुलस्या मालया सह वर्तमानः । १७ प्रियस्य । १८ कदाचिदंसे भुजं प्रक्षिपन्यदाऽगायत ॥ १८ ॥

क्वणितवेणुरववञ्चित[1]चित्ताः कृष्ण[2]मन्व[3]सत कृष्ण[4]-
गृहिण्यः । गुणगणार्ण[5]मनुगत्य हरिण्यो गोपिका
इव वि[6]मुक्तगृहाशाः ॥ १९ ॥ कुन्द[7]दामकृतकौतु-
कवेषो गोपगोधनवृतो यमुनायाम् ।नन्दसूनुरनघे[8]
तव वत्सो[9] नर्मदः[10] प्रणयिनां विजहार ॥ २० ॥
मन्दवायुरुपवात्यनुकूलं मानयन्मलय[11]जस्पर्श-
नेन । वन्दिन[12]स्तमुपदेवगणा ये वाद्यगीतबलिभिः[13]
परिवव्रुः ॥ २१ ॥ वत्सलो[14] व्रजगवां यदगध्रो[15]

१ तदाऽऽकृष्टचित्ताः । २ हरिणं च । ३ अन्वासते न निवर्तन्ते इत्यर्थः । ४ हरिण्यश्च । ५ समुद्रम् । ६ कुतो यतो मुक्तगृहाशा गोपिका इव ता अपि एवमेवान्वासते इत्यर्थः ॥ १९ ॥ ७ तदेवं वृन्दावनप्रदेशेषु क्रीडित्वा सायाह्ने गोधनानि परावर्त्य यमुनायां क्रीडतस्तस्य सौभाग्यमनुवर्णयन्ति । कुन्ददामेति । गोपीनामुत्सवाय कुन्ददामभिः कृत उत्सवेनालङ्कारो येन सः । ८ हे यशोदे । ९ यद्वा सहैव बह्वयः कथयन्त्यः काचित्तव वत्स इति काश्चिन्नन्दसूनुरिति चाहुः । १० हर्षदः सन्यदा क्रीडति स्म ॥ २० ॥ ११ तदा चन्दनस्येव सुरभिशीतस्पर्शेन कृष्णं मानयन्ननुकूलं यथा भवति तथा वीजयति । १२ किञ्च स्तावकाः सन्तो गन्धर्वादिगणाः । १३ पुष्पवर्षादिभिः परित उपासते ॥ २१ ॥ १४ आयान्तं विलोक्य हृष्यन्त्यः परस्परं प्रोचुः । वत्सल इति । व्रजस्य गवां च यद्वा व्रजे निबद्धानां गवामनुकम्प्यानामस्माकमित्यर्थः । हितकृत् । १५ कुतः । यस्माद्गोव-

वन्द्यमानचरणः पथि वृद्धैः[1] । कृत्स्नगोधनमुपोह्य[2] दिनान्ते गीतवेणु[3]रनुगेडितकीर्तिः ॥२२ ॥उत्सवं श्रम[4]रुचापि दृशीनामुन्नयन्खुररजश्छुरितस्रक्[5] । दित्सयै[6]ति सुहृदाशिष एष देवकीजठरभूरुडुराजः[7] ॥२३॥ मद[8]विघूर्णितलोचन ईषन्मानदः स्वसुहृदां वनमाली । बदर[9]पाण्डुवदनो मृदुगण्डं मण्डयन्कन[10]ककुण्डललक्ष्म्या ॥२४॥ यदु[11]पतिर्द्विरदरा[12]जविहारो यामिनीप[13]तिरिवैष दिनान्ते । मुदित[14]वक्त्र उपयाति दुरन्तं[15] मोचयन्व्रजगवां[16] दिनतापम्[17]।२५।

धनोद्धरणः । बहुशो रक्षणस्योपलक्षणमेतत् । १ ब्रह्मादिभिः पथि वन्द्यमानचरणः । ते सेर्ष्यं सायं शीघ्रमागन्तु न ददतीत्यर्थः । २ एकीकृत्य । ३ गीतयुक्तवेणुः ॥ २२ ॥ ४ श्रमयुक्तयापि कान्त्या दृशां हर्षमुच्चैः प्रापयन् । ५ व्याप्तमालः । ६ अस्माकं मनोरथस्य दातुमिच्छया । ७ निर्वृतिहेतुत्वेन स एष एतीति ॥ २३ ॥ ८ अतिसंभ्रमेण काश्चित्समीपमायान्तं कथयन्ति । ईषन्मदेन विघूर्णिते विह्वलिते लोचने यस्य । ९ ईषत्पक्वबदरवत्पाण्डुवदनः । १० अत्र हेतुः कनककुण्डलकान्त्या कोमलौ गण्डौ यस्मिंस्तद्वदनं मण्डयन्निति । कोमलगण्डस्थलं वा शोभयन्निति ॥ २४ ॥ ११ "प्रागयं वसुदेवस्य कचिज्जातस्तवात्मजः" इत्यादि गर्गवाक्यप्रसिद्धयोक्तम् । यद्वा "सख उदेयिवान्सात्वतां कुले" इतिवज्ज्ञात्वा काश्चिद्वदन्तीति । १२ गजेन्द्रगतिः । १३ चन्द्रः । १४ प्रसन्नवक्त्रः । १५ अनन्तम् । १६ अस्माकम् । १७ दिनतापं शमयन्समीपमायातीति॥२५॥

## श्रीशुक उवाच ।

एवं[1] व्रजस्त्रियो राजन्कृष्णलीलानुगायतीः ।
रेमिरेऽहस्सु तच्चित्ता[2]स्तन्मनस्का[3] महोदयाः[4]॥२६॥

इति भागवते दशमस्कन्धे पूर्वार्धे वृन्दावनक्रीडायां गोपिकायुगलगीतं नाम पञ्चत्रिंशोऽध्यायः ॥ ३५ ॥

---

१ एवं विरहदुःखेनापि अन्वहं कृष्णलीला एव गायन्त्यः । २ तस्मिञ्जीवितं यासाम् । ३ संकल्परूपम् । ४ अतो महानुत्सवो यासां ताः । अहःसु रेमिरे ॥ २६ ॥ इति रासक्रीडायां गोपिकायुगलगीतिः संपूर्णा ॥

## अथ भ्रमरगीता प्रारभ्यते ॥

## श्रीशुक उवाच ।

तं वीक्ष्य कृष्णानुचरं व्रजस्त्रियो प्रलम्बबाहुं नवकञ्जलोचनम् । पीताम्बरं पुष्करमालिनं लसन्मुखारविन्दं मणिमृष्टकुण्डलम् ॥ १ ॥ शुचिस्मिताः कोऽयमपीच्य[5]दर्शनः कुतश्च कस्याच्युत[6]वेषभूषणः । इति स्म सर्वाः परिवव्रुरुत्सुकास्तमुत्तमश्लोकपदाम्बुजाश्रयम् ॥ २ ॥

॥ १ ॥ ५ सुन्दरम् । ६ अच्युतस्येव वेषो भूषणानि च यस्य सः । कोऽयं कुतो वा कस्य चेति वदन्त्यस्तं परिवव्रुः ॥ २ ॥

तं प्रश्रयेणावनताः सुसत्कृतं सव्रीडहासेक्षणसूनृतादिभिः। रहस्यपृच्छन्नुपविष्टमासने विज्ञाय संदेशहरं रमापतेः ॥ ३ ॥ जानीमस्त्वां यदुपतेः पार्षदं[१] समुपागतम्। भर्त्रेह[२] प्रेषितः पित्रोर्भवान्प्रियचिकीर्षया ॥ ४ ॥ अन्यथा गोव्रजे तस्य स्मरणीयं न चक्ष्महे। स्नेहानुबन्धो[३] बन्धूनां मुनेरपि सुदुस्त्यजः ॥ ५ ॥ अन्येष्वर्थकृता मैत्री यावदर्थविडम्बनम्[४]। पुंभिः[५] स्त्रीषु कृता यद्वत्सुमनःस्विव षट्पदैः ॥६॥ निःस्वं[६] त्यजन्ति गणिका अकल्पं नृपतिं प्रजाः। अधीतविद्या आचार्यमृत्विजो दत्तदक्षिणम्[७] ॥ ७ ॥ खगा[८] वीतफलं वृक्षं भुक्त्वा चातिथयो गृहम्। दग्धं मृगास्तथाऽरण्यं जारो भुक्त्वा रतां[९] स्त्रियम् ॥८॥

॥ ३ ॥ १ सेवकम् ॥ ४ ॥ २ पित्रोः प्रियचिकीर्षयेत्यत्र हेतुः। स्नेहानुबन्ध इति ॥ ५ ॥ ३ अन्यथा गोव्रजे तस्येत्यत्र हेतुः। अन्येष्विति। कार्यनिमित्ता। ४ अनुकरणमात्रं न तु तात्त्विकी मैत्री। ५ पुंभिरिति दृष्टान्तौ ॥ ६ ॥ ६ अस्यैवान्यार्थनिदर्शनैः प्रपञ्चः। निःस्वमित्यादिना। ७ दत्ता दक्षिणा येन तं याज्यम् ॥ ७ ॥ ८ पक्षिणः। ९ अनुरक्तामतृप्तामित्यर्थः ॥ ८ ॥

इति गोप्यो हि गोविन्दे गतवाक्कायमानसाः ।
कृष्णदूते व्रजं याते उद्धवे त्यक्त[1]लौकिकाः ॥ ९ ॥
गायन्त्यः प्रियकर्माणि रुदत्यश्च गतह्रियः ।
तस्य संस्मृत्य संस्मृत्य यानि[2] कैशोरबाल्ययोः १०
काचिन्मधुकरं दृष्ट्वा ध्यायन्ती कृष्णसंगमम् ।
प्रियप्रस्था[3]पितं दूतं कल्पयित्वेदमब्रवीत् ॥ ११ ॥

गोप्युवाच ।

मधुप कित[4]वबन्धो मा स्पृशाङ्घ्रिं सपत्न्याः कु[5]चविलुलितमालाकुङ्कुमश्मश्रुभिर्नः । वहतु मधुपतिस्त[6]न्मानिनीनां प्रसादं यदुसदसि विडम्[7]ब्यं यस्य दूतस्त्वमी[8]दृक् ॥ १२ ॥ सं[9]कु-

१ त्यक्तलौकिकव्यवहाराः ॥९॥ २ तानि कर्माणि संस्मृत्य गतह्रियः सत्यो रुदत्यश्च तमपृच्छन्निति पूर्वप्रक्रिययैव सम्बन्धः॥१०॥ ३ "श्रीकृष्णेन मां प्रसादयितुं प्रस्थापितोऽयं दूतः" इति कल्पयित्वाऽब्रवीत्। यद्वा तस्मिन्नप्युद्धवे प्रियप्रस्थापितं दूतमिति दूतदृष्टिं कृत्वा मधुकरापदेशेनोद्धवमेवाब्रवीदित्यर्थः । ॥ ११ ॥ ४ हे धूर्तस्य बन्धो नोऽङ्घ्रिं मा स्पृश। मा मां नमस्कारेण प्रार्थयस्वेत्यर्थः। ५ तत्किमित्यपेक्षायां कृष्णवर्णस्य तस्य श्मश्रूणां लोहितत्वे कारणमुत्प्रेक्षमाणाह—सपत्न्याः कुचाभ्यां संमर्दिता या कृष्णस्य वनमाला अतएव तस्याः कुङ्कुमं येषु तैः श्मश्रुभिरुपलक्षितः । ६ किन्तु तासां मानिनीनां प्रसादं कृष्णो वहतु किमस्मत्प्रसादनेन तस्य । ७ उपहासास्पदम् । ८ कुतः यस्य दूतस्त्वमीदृशः ॥ १२ ॥ ९ ननु किमित्येवं तमवजानीथ किं वस्ते-

दधरसुधां स्वां मोहिनीं पाययित्वा सुमनस इव सद्यस्तत्यजेऽस्मान्भवादृक्[1] । परिचरति[2] कथं तत्पादपद्मं नु पद्मा ह्यपि बत[3] हृतचेता उत्तमश्लोक[4]जल्पैः ॥ १३ ॥ किमिह बहु[5] षडङ्घ्रे गायसि त्वं यदूनामधिपतिमगृहाणामग्रतो नः पुराणम्[6] । विजयसख[7]सखीनां गीयतां तत्प्रसङ्गः क्षपितकुचरुजस्ते कल्पयन्तीष्टमिष्टाः[8] ॥ १४ ॥ दिवि भुवि[9] च रसायां[10] काः स्त्रियस्[11]तद्दुरापाः कपट[12]रुचिरहासभ्रूविजृम्भस्य याः स्युः । चरण-

नापकृतमत आह—सकृदिति । १ त्वादृशो दुर्मनाः कुसुमानि यथा त्यजति तद्वत् । २ अहो बताविज्ञस्य तस्य पादपद्मं श्रीः कथं सेवते । विदितं मयेत्याह—अपीति । ३ खेदे । ४ मिथ्याकथाभिः प्रलापैः प्रायो हृतचेताः । वयं तु न लक्ष्मीवदविचक्षणा इति भावः ॥ १३ ॥ ५ झंझाकारान्बहुधा कुर्वन्तमस्मत्प्रसादलाभाय कृष्णं गायतीति मत्वाऽह—किमिहेति । ६ पुरातनं बहुशोऽनुभूतम् । ७ श्रीकृष्णस्य सांप्रतं याः सख्यस्तासामग्रतस्तत्प्रसंगो गीयताम् । ८ कृष्णस्य प्रियाः । तेन पूजिता इति वा तेनालिङ्गितेन क्षपिता कुचरुग्यासां तास्तत्रेष्टमपेक्षितं दास्यन्तीति ॥ १४ ॥ ९ भो मातमैवं वोचस्त्वामनुस्मृत्यानङ्गविक्लवस्त्वां प्रसादयितुं मामादिष्टवानित्यत आह—दिवीति । १० पाताले । ११ तस्य याः स्त्रियः स्युस्ताः का नाम दुरापा न काश्चन । १२ कपटेन रुचिरेण हासेन भ्रूविजृम्भो यस्य

रं[1]ज उपास्ते यस्य लक्ष्मीर्वयं का अपि च[2] कृपणपक्षे ह्युत्तमश्लोकशब्दः ॥१९॥ विसृ[3]ज शिरसि पादं वेद्म्य[4]हं चाटु[5]कारैरनुन[6]यविदुषस्तेऽभ्येत्य[7] दौत्यै[8]र्मुकुन्दात्। स्वकृ[9]त इह विसृष्टापत्यपत्यन्यलोका व्यसृजदकृ[10]तचेताः किं नु सन्धेयमस्मिन् ॥१६॥ मृगयु[11]रिव कपीन्द्रं विव्यधेऽलु[12]ब्धधर्मा स्त्रिय[13]मकृतविरू[14]पां [15]स्त्रीजितः काम[16]यानाम्। बलिमपि बलि[17]-

तस्य । हे कपट इति वा । १ यस्याङ्घ्रिरजः श्रीः सेवते तत्र वयं काः । २ यद्यप्येवं तथापि कृपणानुकम्पिनि पुंसि उत्तमश्लोकशब्दो भवतीति तथा कथनीयं त्वयेति भावः ॥ १९ ॥ ३ पादमूले प्रविशंतं क्षमापयिष्यन्तमिव मत्वाऽऽह—विसृजेति । शिरसि न्यस्तं पादं विसृज । ४ तथाप्यमुञ्चन्तमाह—वेद्मीति । ५ प्रियोक्तिरचनाभिः । ६ प्रार्थनाचतुरस्य तत्र सर्वमहं वेद्मि । ७ ततः शिक्षित्वेत्यर्थः । मुकुन्दवत्त्वमप्यविश्वसनीय इति भावः। ८ दूतकर्मभिः । ९ ननु तेन किमपराद्धं तत्राह-स्वकृत इति । तदर्थमेव विसृष्टा अपत्यानि पतयश्चेतीह लोकोऽन्यलोको धर्मसाध्यश्च याभिस्ता नः। १० असंयतचित्तो यो व्यसृजदस्मिन्किं नु सन्धातव्यमिति ॥ १६ ॥ ११ किंच कृष्णस्य पूर्वाणि कर्माण्यनुसन्दधाना बिभेम्यहमस्मादित्याह-मृगयुरिति । लुब्धक इव यो वालिनमविध्यत् । १२ लुब्धको हि तन्मांसमत्तुकामो विध्यत्ययं तु न तथाऽतो वृथा कठिन इत्यर्थः । १३ तथा शूर्पणखाम्। १४ छिन्नकर्णनासिकां रामरूपेण । १५ सीतापरतन्त्रः। १६ काम एव प्राप्तिसाधनं यस्यास्ताम्। १७ तथा तद्दत्तं बलिं भक्षयित्वा काकवद्-

मत्त्वाऽवेष्टयद्ध्वाङ्क्षवद्यस्तदलमसितसख्यैर्दुस्त्यजस्तत्कथार्थः ॥ १७ ॥ यदनुचरितलीलाकर्णपीयूषविप्रुट्सकृददनविधूतद्वन्द्वधर्मा विनष्टाः। सपदि गृहकुटुम्बं दीनमुत्सृज्य दीना बहव इह विहङ्गा भिक्षुचर्यां चरन्ति ॥ १८ ॥ वयमृतमिव जिह्म-

बन्ध वामनरूपेण "बलिमत्त्वाऽधोऽक्षिपद्विष्टपाद्य" इति पाठे। पूजां गृहीत्वा स्वर्गादधोऽक्षिपदित्यर्थः। १ तस्मात्कृष्णस्य सख्यैरलम्। २ एवं चेत्किमिति तं नित्यं गायथ तत्राह--दुस्त्यजस्तु तस्य कथारूपोऽर्थ इति। ॥ १७ ॥ ३ अपिच जानीम एव तत्कथापि त्रिवर्गलतामूलोन्मूलनीति तथापि न त्यक्तुं शक्नुमः। किं कुर्म इत्याह--यदनुचरितेति। यस्यानुचरितमेव लीला तदेव कर्णपीयूषं तस्य कणिका तस्याः सकृत्सेवनेन निरस्ता रागादयो येषां ते अत एवाऽसत्तुल्याः। ४ तत्क्षणमेव। ५ दुःखितम्। ६ भोगहीनाः। ७ विहंगा इव। ८ प्राणवृत्तिमात्रं चरन्त्यतस्त्याज्यस्तथापि त्यक्तुं न शक्नुम इति निन्दापरत्वेऽयमर्थस्तावच्छ्रौतः। दुस्त्यजत्वेऽपि पारमार्थिकोऽयमर्थः। विधूतद्वन्द्वधर्मा इत्यन्तोऽयं समासः पूर्ववत्। ततस्ते च ते अविनष्टाश्चेति समासः। इतरे पुनर्द्वन्द्वधर्माणो विनष्टा एव। तत्क्षणमेव तुच्छं गृहसहितकुटुम्बं विहायाकिञ्चनाः बहवो हंसा इव सारासारविवेकचतुराः पारमहंस्यं चरन्ति। तस्मादेवं परमपुरुषार्थरूपत्वाद्दुस्त्यज एव तत्कथार्थ इति ॥ १८ ॥ ९ ननु किमेवं ब्रूषे पूर्वं त्वयैव साकं रहसि किमेवं नावोचदित्यत आह-वयमिति। हे दूत। आस्तामियं वार्ता।

व्याहृतं श्रद्दधानाः कुलिकं[1]हतमिवाज्ञाः कृष्ण-
वध्वो हरिण्यः । दहशुरसकृदेतत्तन्नखं[2]स्पर्शतीव्र-
स्मररुज उपमन्त्रिन्भण्यं[3]तामन्यवार्ता ॥ १९ ॥
प्रियसं[4]ख पुनरागाः प्रेयसा प्रेषितः किं वरयं[5] कि-
मनुरुन्धे माननीयोऽसि मेऽङ्ग नं[6]यसि कथमिहा-
स्मान्दुस्त्यजं[7]द्वन्द्वपार्श्वं सततं[8]मुरसि सौम्य
श्रीर्वधूः साकमास्ते ॥ २० ॥ अं[9]पि बं[10]तं मधुपु-
र्यामार्यपुत्रोऽधुनाऽऽस्ते स्मरति स पितृगेहान्सौ-
म्य बन्धूंश्च गोपान् । क्वं[11]चिदपि स कथा नः

यतः । १ मृगयुगीतमज्ञा यथा सत्यमिति श्रद्दधानाः हरिणभार्या हरिण्य
शरैः क्षताः सत्यो रुजो ददृशुः । एवं कुटिलस्य व्याहृतमृतमिव श्रद्दधाना
स्पृहयन्त्यो वयमसकृदेतद्ददृशिम । किं तत् । २ तस्य नखैः स्पर्शेन तीव्र
स्मरेण पीडाः । ३ तस्मादन्या वार्ताः कथ्यताम् ॥ १९ ॥ ४ परावृत्त
गत्वा पुनरागतं प्रत्याह-प्रियसखेति । प्रियस्य सखे कृष्णेन पुनः प्रेषितः कि
त्वमागतोऽसि । ५ हे अङ्ग मे पूज्योऽसि । अतो भवान्किं प्राप्तुमिच्छति
तद्वृणीष्व । ६ संमानितं प्रत्याह—नयसीति । इह सतीरस्मान् । ७
दुस्त्यजो मिथुनीभावो यस्य तस्य समीपं कथं नेष्यसि । ८ तथाहि हे
सौम्य श्रीनाम वधूः सहैव सततमास्ते तत्रापि वक्षस्येव ॥ २० ॥ ९
तेन संमन्त्रिता सती ब्रूते । अपि बतेति। १० हर्षे हे सौम्य गुरुकुलादाग-
त्य श्रीकृष्णोऽधुना मथुरायां किं वर्तते । ११ कदाचिदपि नो वार्ताः कि

किङ्करीणां गृणीते भुजमगुरु[1]सुगन्धं मूर्ध्न्यधा-
स्यत्कदा नु ॥ २१ ॥

श्रीशुक उवाच।

[2]अथोद्धवो निशम्यैवं कृष्णदर्शनलालसाः।
सान्त्वयन्प्रियसन्देशैर्गोपीरिदमभाषत ॥ २२ ॥

उद्धव उवाच।

[3]अहो यूयं स्म[4] पूर्णार्था भवत्यो लोकपूजिताः।
वासुदेवे भगवति यासामित्यर्पितं मनः ॥ २३ ॥
दानव्रततपोहोमजपस्वाध्यायसंयमैः।
श्रेयोभि[5]र्विविधैश्चान्यैः कृष्णे भक्तिर्हि साध्यते।२४।
भगवत्युत्तमश्लोके भवतीभिरनुत्तमा[6]।
भक्तिः प्रवर्तिता दिष्ट्या मुनीनामपि दुर्लभा।२५।
दिष्ट्या पुत्रान्पतीन्देहान्स्वजनान्भवनानि च।
हित्वाऽवृँणीत[7] यूय यत्कृष्णाख्यं पुरुषं परम्॥२६॥

ब्रूते। १ अगुरुवत्सुगन्धं भुजं नो मूर्ध्नि कदा नु धारयतीति ॥ २१ ॥
२ श्रीकृष्णदर्शनोत्सुका गोपीः प्रियस्य संदेशैः सान्त्वयन्प्रथमं तावदि-
दमभाषत ॥ २२ ॥ ३ तदाह षड्भिः। अहो इति। ४ नूनं यूय
कृतार्थाः ॥ २३ ॥ ५ श्रेयःसाधनैः ॥ २४ ॥ ६ अतिश्रेष्ठा ॥ २५ ॥
७ वृतवत्यः ॥ २६ ॥

सर्वात्मभावो[1]ऽधिकृतो[2] भवतीनामधोक्षजे ।
विरहेण महाभागा महान्[3]मेऽनुग्रहः कृतः ॥ २७॥
श्रूयतां प्रियसन्देशो भवतीनां सुखावहः ।
यमादायागतो भद्रा अहं भर्तू[4] रहस्करः ॥ २८ ।

श्रीभगवानुवाच ।

भवतीनां[5] वियोगो मे नहि सर्वात्मना[6] क्वचित् ।
यथा[7] भूतानि[8] भूतेषु[9] खं वाय्वग्निर्जलं मही ।
तथाऽहं च मनः[10]प्राणभूतेन्द्रियगुणाश्रयः॥२९॥
आत्मन्ये[11]वात्मनात्मानं सृजे हन्म्यनुपालये ।
आत्ममायाऽनुभावेन भूतेन्द्रिय[12]गुणात्मना ॥३०॥

१ एकान्तभक्तिः । २ प्राप्तः । ३ भगवत्प्रेमसुखदर्शनेन मयै
महाननुग्रहः कृतः ॥ २७ ॥ ४ कृष्णस्य रहस्यकार्यकर्ता ॥ २८ ॥
भवतीनां मया सह वियोगो नास्ति । ६ कुतः सर्वस्योपादानकारणेन ।
अत एव सर्वेषु मनआदिकार्येष्वहमनुगतत्वेन स्थित इति सदृष्टान्तमाह
यथेति। ८ महाभूतानि। ९ चराचरेषु। १० मन आदीनि कार्याणि गुण
कारणं तेषामाश्रयत्वेनानुगत इत्यर्थः ॥ २९ ॥ ११ ननु कारणत्वे सर्वानु
तत्वे च कार्यकारणभेदः स्यादत आह—आत्मनीति । १२ ननु नित्यसिद्ध
स्य कुतः सृष्ट्यादिरूपता अत आह—भूतेन्द्रियेति । तद्रूपेण । ननु निर्वि
कारस्य कुतस्तद्रूपतेति तत्राह-आत्ममायेति ॥ ३० ॥

आत्मा[1] ज्ञानमयः शुद्धो व्यतिरिक्तोऽगुणान्वयः ।
सुषुप्ति[2]स्वप्नजाग्रद्भिर्मायावृत्तिभिरीयते ॥ ३१ ॥
येने[3]न्द्रियार्थान्ध्यायेत मृषा स्वप्नवदुत्थितः ।
तन्निरुन्ध्यादिन्द्रियाणि विनिद्रः[4] प्रत्यपद्यत ॥ ३२ ॥
एत[5]दन्तः समा[6]म्नायो योगः[7] सांख्यं[8] मनीषिणाम् ।
त्यागस्[9]तपो[10] दमः[11] सत्यं समुद्रा[12]न्ता यथापगाः ॥ ३३ ॥
यत्[13]त्वहं भवतीनां वै दूरे वर्ते प्रियो दृशाम् ।
मनसः सन्निकर्षार्थं मदनुध्यानकाम्यया ॥ ३४ ॥

१ नन्वात्मनो भूतादिरूपत्वे तद्दोषप्रसङ्गः स्यात्तत्राह-आत्मेति । आत्मा तु शुद्धः। कुतः न गुणेष्वन्वेतीति तथा। तत्कुतः व्यतिरिक्तः। तदपि कुतः ज्ञानस्वरूपः। २ नन्वहंप्रत्यये स्वसंवेद्यमेवात्मनो नानावस्थावत्त्वमिति कुतः शुद्धतेति तत्राह-सुषुप्तीतिमायाकार्यमनोवृत्तिभिर्विश्वतैजसप्राज्ञरूपेण प्रतीयते न स्वत इत्यर्थः ॥ ३१ ॥ ३ कुतः । मनोनिरोधे तदभावादिति व्यतिरेकं दर्शयितुं मनोनिरोधं विधत्ते । येनेति उत्थितः पुमान्यथा मिथ्याभूतमेव स्वप्नं ध्यायत्येवं बाधितानपीन्द्रियार्थान् शब्दादीन्येन मनसा चिन्तयेत् । ध्यायंश्च येनेन्द्रियाणि प्राप तन्मनः । ४ अनलसः सन्नियच्छेदिति ॥ ३२ ॥ ५ तावता च कृतार्थो भवतीत्याह-एतदन्त इति । मनोनिरोधफलः । ६ वेदः स तत्र पर्यवस्यतीत्यर्थः । ७ अष्टाङ्गः । ८ आत्मानात्मविवेकः । ९ संन्यासः । १० स्वधर्मः। ११ इन्द्रियदमनम्। १२ मार्गभेदेऽप्येकत्र पर्यवसाने दृष्टान्तः। समुद्रान्ता नद्य इवेति ॥ ३३ ॥ १३ ननु किमन्यानिवास्मानात्मविद्यया प्रलो

यथा दूरचरे प्रेष्ठे मन आविश्य वर्तते ।
स्त्रीणां च न तथा चेतः सन्निकृष्टेऽक्षगोचरे ॥३५॥
मय्यावेश्य मनः कृत्स्नं विमुक्ताशेषवृत्ति यत् ।
अनुस्मरन्त्यो मां नित्यमचिरान्मामुपैष्यथ॥३६
यां मया क्रीडता रात्र्यां वनेऽस्मिन्व्रज आस्थिताः
अलब्धरासाः कल्याण्यो माऽऽपुर्मद्वीर्यचिन्तय
॥ ३७ ॥

## श्रीशुक उवाच ।

एवं प्रियतमादिष्टमाकर्ण्य व्रजयोषितः ।
ता ऊचुरुद्धवं प्रीतास्तत्सन्देशागतस्मृतीः॥ ३८ ॥

इति भ्रमरगीता नाम सप्तचत्वारिंशोऽध्यायः ॥ ४७ ॥

भयसि वयं तु सर्वसुन्दरसकलगुणगणालंकृतेन त्वया विरहं नैव सहाम इति चेत्तत्राह-यत्त्वहमिति । दृशां दूरे यद्वर्ते तन्मदनुध्यानार्थम् । तच्च ध्यान मनसः सन्निकर्षार्थमिति ॥ ३४ ॥ १ एतदुपपादयति त्रयेण यथा दूरेति ॥ ३५ ॥३६॥ २ उपैष्यथेति माधुर्यमात्रमिति चेदत आह या इति । हे कल्याण्यः स्वभर्तृभिः प्रतिबद्धा या वने क्रीडता मया सहाऽलब्धक्रीडास्तास्तदैव मामापुः ॥३७॥ ३ तस्य सन्देशेनागता स्मृतिर्यासां ताः । प्रथमार्थे द्वितीया ॥ ३८ ॥ इति श्रीभागवते दशमस्कन्धे भ्रमरगीता नाम सप्तचत्वारिंशोऽध्यायः ॥ ४७ ॥

# अथ भिक्षुगीता प्रारभ्यते ।

श्रीभगवानुवाच ।

बार्हस्पत्य न सोऽस्त्येव साधुर्वै दुर्जनेरितैः ।
दुरुक्तैर्भिन्नमात्मानं यः समाधातुमीश्वरः ॥ १ ॥
न तथा तप्यते विद्धः पुमान्बाणैर्हि मर्मगैः ।
यथा तुदन्ति मर्मस्था ह्यसतां परुषेषवः ॥ २ ॥
कथयन्ति महत्पुण्यमितिहासमिहोद्धव ।
तमहं वर्णयिष्यामि निबोध सुसमाहितः ॥३॥
केनचिद्भिक्षुणा गीतं परिभूतेन दुर्जनैः ।
स्मरता धृतियुक्तेन विपाकं निजकर्मणाम् ॥४॥
अवन्तिषु द्विजः कश्चिदासीदाढ्यतमः श्रिया ।

१ अत्र भिक्षुगीतया मनोविजयो भगवता वर्ण्यते । तत्र तावदंगीकारस्तत्तद्वचः सम्पूजयति द्वाभ्याम् । हे बृहस्पतेः शिष्य दुर्जनोक्तैः क्षुभितं मनः शमयितुमीश्वरो यः स साधुर्लोके नास्त्येव ॥ १ ॥ २ कुत इत्यत आह—नेति । यथा मर्मस्वेव नित्यं स्थिताः परुषोक्तिरूपा इषवस्तुदन्ति तथा इतरे बाणा न व्यथयन्ति । अतस्तैस्तथा न तप्यत इत्यर्थः ॥ २ ॥ ३ तथापि मया वक्ष्यमाणैरुपायैः सर्वं सोढुं शक्यमित्यभिप्रायेणेतिहासं प्रस्तौति । महद्यथा भवति तथा पुण्यमितिहासं गाथां कथयन्ति ॥ ३ ॥४॥ ४ स भिक्षुः पूर्वं धनाढ्यः कृच्छ्रार्जितस्य धनस्य नाशेन सन्तप्यमानो निर्विण्णः सन्प्रव्रज्य भिक्षार्थमटन् दुर्जनैरुपद्रुतः प्रस्तुतोपयोगिनीं गाथा-

वार्तावृत्तिः[1] कदर्यश्च[2] कामी लुब्धोऽतिकोपनः ॥५॥
ज्ञातयोऽतिथयस्तस्य[3][4] वाङ्मात्रेणापि नार्चिताः ॥
शून्यावसथ[5] आत्मापि काले कामैरनर्चितः ॥६॥
दुःशीलस्य कदर्यस्य दुह्यन्ते पुत्रबान्धवाः ।
दारा दुहितरो भृत्या विषण्णा नाचरन्प्रियम् ॥७॥
तस्यैवं यक्षवित्तस्य[6] च्युतस्योभयलोकतः ।
धर्मकामविहीनस्य चुक्रुधुः पञ्चभागिनः[7] ॥ ८ ॥
तदवध्यानविस्रस्तपुण्यस्कन्दस्य[8] भूरिद ।
अर्थोऽप्यगच्छन्निधनं बह्वायासपरिश्रमः[9] ॥ ९ ॥
ज्ञातयो[10] जगृहुः किञ्चित्किञ्चिद्दस्यव उद्धव ।
दैवतः[11] कालतः[12] किञ्चिद्ब्रह्मबन्धोर्नृपार्थिवात्[13] ॥१०॥

मगायतेति वक्तुं तस्य पूर्वचरितमाह—अवन्तिष्विति। मालवेषु। १ कृषिवाणिज्यादिरूपा वृत्तिर्यस्य सः। २ आत्मानं धर्मकृत्यं च पुत्रदारांश्च पीडयन् देवतातिथिभृत्यांश्च स कदर्य इति स्मृतः ॥ ५ ॥ ३ तस्य ये बान्धवाः। ४ अध्वनीनाश्च तेन नार्चिता इत्यर्थः। ५ धर्मकर्महीने गृहे देहे वा ॥ ६ ॥७॥ ६ यक्षाणां वित्तमिव केवलं रक्षणीयं वित्तं यस्य । ७ पञ्चयज्ञदेवताः ॥८॥ ८ तेषामनादरेण विशीर्णः पुण्यस्य अर्थलाभमात्रहेतुरंशो यस्य । ९ कृष्यादिभिः केवलं श्रमो यस्मिन्सः ॥९॥ १० कुतो निधनमगच्छत्तदाह—ज्ञातय इति। ११ गृहदाहादिना। १२ निखातधान्यादि। १३ द्वन्द्वैक्यम्। नृतः पार्थिवाच्च ॥ १० ॥

स एवं द्रविणे नष्टे धर्मकामविवर्जितः।
उपेक्षितश्च स्वजनैश्चिन्तामाप दुरत्ययाम् ॥११॥
तस्यैवं ध्यायतो दीर्घं नष्टरायस्तपस्विनः।
खिन्नस्य बाष्पकण्ठस्य निर्वेदः सुमहानभूत्।१२।
स चाहेदमहो कष्टं वृथात्मा मेऽनुतापितः।
न धर्माय न कामाय यस्यार्थायास ईदृशः।१३।
प्रायेणार्थाः कदर्याणां न सुखाय कदाचन।
इह चात्मोपतापाय मृतस्य नरकाय च ॥१४॥
यशो यशस्विनां शुद्धं श्लाघ्या ये गुणिनां गुणाः।
लोभः स्वल्पोऽपि तान्हन्ति श्वित्रो रूपमिवेप्सितम्
अर्थस्य साधने सिद्ध उत्कर्षे रक्षणे व्यये।
नाशोपभोग आयासस्त्रासश्चिन्ता भ्रमो नृणाम्१६
स्तेयं हिंसाऽनृतं दम्भः कामः क्रोधःस्मयो मदः।
भेदो वैरमविश्वासः संस्पर्धा व्यसनानि च।१७।

११॥१ नष्टधनस्य। २ सन्तप्तस्य ॥१२॥ ३ वृथा देहश्च। ४ भया। ५ आत्मानुतापं प्रपञ्चयति न धर्मायेति। ६ यस्य ईदृशोऽर्थायासस्तेन मया ॥१३॥७ नरकाय सत्यप्यर्थे धर्माननुष्ठानात् ॥ १४ ॥ ८ श्वेतकुष्ठम् ॥ ॥ १५ ॥ ९ सिद्धेऽप्यर्थे तस्य संवर्धने। १० द्वंद्वैक्यं नाशे उपभोगे च। साधनोत्कर्षयोरायासस्ततस्त्रासश्चिन्ता च नाशे भ्रम इति ॥१६॥ ११ किञ्च। अर्थप्राप्त्यर्थं स्तेयादयः षडनर्थाः। प्राप्तेऽर्थे स्मयादयो व्यसनैः स्त्रीद्यूतमद्यविनयैस्त्रिभिः सह नव ॥ १७ ॥

एते पञ्चदशानर्था ह्यर्थमूला मता नृणाम्।
तस्मादनर्थमर्थाख्यं श्रेयोर्थी दूरतस्त्यजेत्॥१८॥
भिद्यन्ते[1] भ्रातरो दाराः पितरः सुहृदस्तथा।
एका[2]स्निग्धाः काकिणिना[3] सद्यः सर्वेऽरयः कृताः॥
१९॥अर्थेनाल्पीयसा ह्येते संरब्धा[4] दीप्तमन्यवः।
त्यजन्त्याशु स्पृधो[5] घ्नन्ति सहसोत्सृज्य सौहृदम्॥
लब्ध्वा[6] जन्मामरप्रार्थ्यं मानुष्यं तद्द्विजाग्र्यताम्[7]।
तदनादृत्य ये स्वार्थं[8] घ्नन्ति यान्त्यशुभां गतिम्॥२
स्वर्गापवर्गयोर्द्वारं[9] प्राप्य लोकं[10]मिमं पुमान्।
द्रविणे कोऽनुषज्जेत[11] मर्त्योऽनर्थस्य धामनि॥२२॥
देवर्षि[12]पितृभूतानि ज्ञातीन्[13]बन्धूंश्च[14] भागिनः[15]।
असंविभज्य[16] चात्मानं यक्षवित्तः पतत्यधः।२३।

॥१८॥ १ भेदवैरस्पर्धाः प्रपञ्चयति द्वाभ्याम्। स्नेहं त्यजन्ति २ एकं प्राणास्ते च ते आस्निग्धा अतिप्रियाश्चेत्यर्थः। ३ कु पुंस्त्वमार्षम्। विंशतिवराटिका काकिणी तया ॥ १९ ॥ ४ क्षुभिताः ५ स्पर्धमानाः ॥ २० ॥ ६ इह तावदर्थनिष्ठानामेतेऽनर्था परलो ऽप्यनर्थाः एव तेषामप्याह–लब्ध्वेति त्रिभिः। ७ तत्रापि ब्राह्मण्यम्। आत्महितं न कुर्वति ये ते नरकं यान्ति ॥ २१ ॥ ९ अमरप्रार्थ्यतां द यन्नाह–स्वर्गेति। १० देहम्। ११ आसक्तिं कुर्यात् ॥ २२ ॥ १२ ऋष मनुष्ययज्ञब्रह्मयज्ञयोर्देवताः। देवपितृभूतानि इतरेषु। १३ सगोत्रान्। १ विवाहादिना सम्बद्धान्। १५ भागार्हान्। १६ अन्नादिनाऽसन्तर्प्य ॥२३॥

व्यर्थया[1]ऽर्थेहया वित्तं[2] प्रमत्तस्य वयो बलम् ।
कुशला[3] येन[4] सिध्यन्ति जरठः[5] किं नु साधयेत्॥२४॥
कस्मात्[6]संक्लिश्यते विद्वान् व्यर्थयार्थेहयाऽसकृत्।
कस्यचि[7]न्मायया नूनं लोकोऽयं सुविमोहितः॥२५॥
किं[8] धनैर्धनदैर्वा किं कामैर्वा कामदैरुत[9] ।
मृत्युना ग्रस्यमानस्य कर्मभिर्वोत जन्मदैः ॥२६॥
नूनं[10] मे भगवांस्तुष्टः सर्वदेवमयो हरिः ।
येन[11] नीतो दशामेतां निर्वेदश्चात्मनः प्लवः ॥२७॥
सोऽहं कालावशेषेण शोषयिष्ये[12]ऽङ्गमात्मनः ।
अप्रमत्तोऽखिले स्वार्थे यदि[13] स्यात्सिद्ध आत्मनि॥२८॥

१ एवं विमृश्यानुतप्यमान आह—व्यर्थयेति । २ मे वित्तादि व्यर्थमेव गतमिति शेषः । ३ विवेकिनः । ४ वित्तादिना मुच्यन्ते । ५ वृद्धः ॥ २४ ॥ ६ अन्यमपि स्वसदृशं शोचति । कस्मादेवमनर्थं विद्वानपि संक्लिश्यते इति कारणं संभावयति । ७ कस्यचिदिति ॥ २५ ॥ ८ ननु नायं मोहितः क्लिश्यति किन्तु धनादिभिर्भोगादिविधित्सयाऽत आह—किं धनैरिति ॥ ९ उत पुनरपि ॥ २६ ॥ १० इदानीं सम्पन्नविवेकः स हृष्यन्नाह—नूनमिति त्रिभिः। ११ प्रीतेनात्मनः प्लवरूपो निर्वेदश्च भवति स हरिर्मे नूनं प्रीत इति ॥ २७ ॥ १२ तपसा यद्वा विद्यया लयं नेष्यामि। १३ यदि स्यात्कालावशेषस्तर्ह्यात्मन्येव तुष्टः सन् । अखिले स्वार्थे धर्मादिसाधनेऽप्रमत्तः सन्। ॥ २८ ॥

तत्र मामे[1]नुमोदेरन्देवास्त्रिभुवनेश्वराः ।
मुहूर्तेन[2] ब्रह्मलोकं खट्वाङ्गः समसाधयत् ॥ २९ ॥

श्रीभगवानुवाच ।

इत्यभिप्रेत्य[3] मनसा ह्यावन्त्यो[4] द्विजसत्तमः ।
उन्मुच्य हृदयग्रन्थीन्[5] शान्तो भिक्षुरभून्मुनिः ३०
स चचार महीमेतां संयतात्मेन्द्रियानिलः ।
भिक्षार्थं नगरग्रामानसङ्गो[6]ऽलक्षितो[7]ऽविशत् ॥ ३१ ॥
तं वै प्रवयसं[8] क्षुमवभिधूतम[9]सज्जनाः ।
दृष्ट्वा परिभवन्[10]भद्र बह्वीभिः परिभूतिभिः[11] ॥ ३२ ॥
केचित्त्रिवेणुं[12] जगृहुरेके पात्रं कमण्डलुम् ।
पीठं चैकेऽक्षसूत्रं च कन्थां चीराणि केचन ॥ ३३ ॥
प्रादाय[13] च पुनस्तानि दर्शितान्याददुर्मुनेः ।
अन्नं च भैक्ष्यसम्पन्नं भुञ्जानस्य सरित्तटे ॥ ३४ ॥

१ अनुगृह्णन्तु । २ ननु देवैरनुमोदितोऽपि जरठः स्वल्पेन कालेन किं साधयिष्यति तत्राह–मुहूर्तेनेति ॥२९॥ ३ निश्चित्य । ४ अवन्तिदेशभवः। ५ अहंकारममकारान् ॥ ३० ॥ ६ आसक्तिशून्यः । ७ श्रैष्ठ्यमद्योतयन् ॥ ३१ ॥ ८ वृद्धम् । ९ मलिनम् । १० अवमेनिरे । ११ तिरस्कारैः ॥३२॥ १२ परिभवानेव दर्शयति–केचिदिति सप्तभिः ॥ ३३ ॥ १३ भो भगवन् गृहाणेति दर्शितानि सन्ति प्रदाय पुनश्चाददुः ॥ ३४ ॥

मूत्रयन्ति[1] च पापिष्ठाः ष्ठीवयन्ति[2] च मूर्धनि ।
यतवाचं वाचयन्ति ताडयन्ति न वक्ति चेत्।३५।
तर्जयन्त्यपरे वाग्भिः स्तेनोऽयमिति वादिनः ।
बध्नन्ति रज्ज्वा तं केचिद्बध्यतां वध्यतामिति ३६
क्षिपन्त्येके[3]ऽवजानन्त एष[4] धर्मध्वजः शठः[5] ।
क्षीणवित्त[6] इमां वृत्तिमग्रहीत्स्वजनोज्झितः॥ ३७ ॥
अहो एष महासारो[7] धृतिमान् गिरिराडिव ।
मौनेन साधयत्यर्थं बकवद्दृढनिश्चयः ॥ ३८ ॥
इत्येके विहसन्त्येनमेके दुर्वातयन्ति[8] च ।
तं बबन्धु[9]र्निरुरुधु[10]र्यथा क्रीडनकं[11] द्विजम् ॥ ३९ ॥
एवं स भौ[12]तिकं दुःखं दै[13]हिकं दै[14]विकं च यत् ।
भोक्तव्यमात्मनो दि[15]ष्टं प्राप्तं प्राप्तमबुध्यत॥४०॥

१ अन्ने मूत्रयन्ति । २ मूर्धनि फूत्कारेण श्लेष्माणं प्रक्षिपन्ति ३५ ॥ ३६ ॥ ३ निन्दन्ति । ४ निन्दामेवाह । एष धर्मध्वजस्त्रिदण्डलि- ङ्गोपजीवी । ५ लोकवञ्चकः । ६ तदेवाहुः—क्षीणवित्त इति ॥ ३७ ॥ ७ अतिबली ॥ ३८ ॥ ८ तदुपर्यधोवायुं मुञ्चन्ति । ९ शृङ्खलैः । १० कारागृहादिषु । ११ शुकसारिकादि यथा ॥३९॥ १२ दुर्जनादिकृतम्। १३ ज्वरादिनिमित्तम् । १४ शीतोष्णादिप्रभवम् । १५ दैवप्राप्तम् ॥४०॥

परिभूत इमां गाथामगायत नराधमैः । पातयद्भिः[1] स्वधर्मस्थो[2] धृतिमास्थाय सात्त्विकीम् द्विज उवाच ॥ नायं[3] जनो मे सुखदुःखहेतुर्न देवतात्मा[4] ग्रहकर्मकालाः । मनः परं[5] कारणम्[6] आमनन्ति[7] संसारचक्रं परिवर्तयेद्यत् ॥ ४२ ॥ मनो[8] गुणान्वै[9] सृजते बलीयस्ततश्च[10] कर्माणि विलक्षणानि । शुक्लानि[11] कृष्णान्यथ[12] लोहितानि[13] तेभ्यः सवर्णाः[14] सृतयो[15] भवन्ति ॥ ४३ ॥ अनीह[16] आत्मा मनसा

१ धर्मात् । २ परिभूतोऽपि सात्त्विकीं धृतिमास्थाय स्वधर्म एव स्थित इमां वक्ष्यमाणां गाथामगायत । सात्त्विकी धृतिश्च "धृत्या यया धारयते मनःप्राणेंद्रियक्रियाः । योगेनाव्यभिचारिण्या धृतिः सा पार्थ सात्त्विकी" इति ॥ ४१ ॥ ३ तामेवाष्टादशश्लोकीं गाथामाह—नायमिति । नचात्मा, नापि ग्रहादयः । ५ केवलम् । ६ सुखदुःखयोः । ७ वदंति "मनसा ह्येव पश्यति मनसा शृणोति" इत्यादिश्रुतयः ॥ ४२ ॥ परिवर्तनप्रकारमाह—मन इत्यादि । ९ गुणवृत्तीः सृजति । १० तेभ्यो गुणेभ्यः । ११ सात्त्विकानि । १२ तामसानि । १३ राजसानि । १४ तत्तत्कर्मानुरूपाः । १५ देवतिर्यङ्नरादिगतयः ॥४३॥ १६ तर्हि मनस एव संसारः स्यान्नात्मन इत्याशंक्याह—अनीह इति ॥ अयमर्थः—अविद्याऽध्यासेनेयमात्मनः संसृतिर्न तु स्वतः । यतस्तद्रहितस्येश्वरस्य सा नास्ति किन्तु

[1]समीहता हिरण्मयो मत्[2]सख उद्वि[3]चष्टे।मनः[4]स्वलिङ्गं
परि[5]गृह्य कामान्जुषन्निबद्धो गुण[6]सङ्गतोऽसौ४४॥
दा[7]नं स्वधर्मो[8] नियमो[9] यमश्च श्रुतं च कर्माणि च
सद्व्रता[10]नि। स[11]र्वे मनोनिग्रहलक्षणान्ताः परो हि
यो[11]गो मनसः समाधिः ॥ ४५॥ स[12]माहितं यस्य
मनः प्रशान्तं दानादिभिः किं वद तस्य कृत्यम्।
[13]असंयतं यस्य मनो वि[14]नश्यद्दानादिभिश्चेदपरं
किमेभिः ॥ ४६ ॥ म[15]नोवशेऽन्ये ह्यभवन्स्म

तद्वतो जीवस्यैवेति। तदेवाह—१ कुर्वता मनसा सह नियन्तृत्वेन वर्तमानोऽपि परमात्मा तत्क्रियासङ्गरहितः । यतो हिरण्मयो विद्याशक्तिप्रधानः ।२ यतो जीवनियन्ता । ३अत उच्चैः पश्यति अतिरोहितज्ञानेन केवलं पश्यतीत्यर्थः। ४ असौ पुनरहं जीवो ब्रह्मणि संसारद्योतकं मनः । ५ आत्मत्वेन स्वीकृत्य । ६मनसो गुणैः कर्मभिः संबद्धो गुणसंगाद्वा कामान् जुषन्निबद्ध इति ।।४४।। ७अतो मनोनिग्रहे कृते सर्वं कृतं स्यात्तं विना तु सर्वं व्यर्थमित्याह—दानमिति द्वाभ्याम् । ८ नित्यनैमित्तिकः। ९ एकादश्युपवासादीनि अन्यानि च यावन्ति कर्माणि।१०एते सर्वे उपाया मनोनिग्रहलक्षणफलाः।११ननु ज्ञाना-त्वं तेषां प्रसिद्धं तत्राह—मनसो निग्रह एव परो ज्ञानम् ॥ ४५ ॥१२ अतो यस्य मनः समाहितं भवति तस्य किं कृत्यमस्ति वदेत्यपरं प्रत्युपदिशन्निव स्वयमेवाह । १३ विक्षिप्तं चेत्। यद्वा। १४आलस्यादिना लीयमानं चेद्भवेत्तर्ह्यभिर्दानादिभिः किमपरं प्रयोजनं स्यान्न किञ्चिदित्यर्थः ॥ ४६ ॥ १५ नन्वित-

देवो[1] मनश्च नान्यस्य वशं समेति । भीष्मो[2] हि
देवःसहसः[3]सहीयान्युञ्ज्याद्वशे[4] तं स[5] हि देवदेवः ४७
तं दुर्जयं शत्रुमसह्य[6]वेगमरुन्तुदं[7] तन्न[8] विजित्य के-
चित् । कुर्वन्त्यसद्विग्रहमत्र मर्त्यैर्मित्राण्युदासीन-
रिपून्विमूढाः ॥४८॥ देहं मनो[9]मात्रमिमं गृहीत्वा
ममाहमित्यन्धधियो मनुष्याः । एषोऽहमन्यो-
ऽयमिति भ्रमेण दुरन्तपारे तमांसि[10] भ्रमन्ति ॥४९॥
जनै[11]स्तु हेतुः सुखदुःखयोश्चेत्किमात्मनश्चात्र[12]

रेन्द्रियजयः प्रयोजनं स्यान्नेत्याह—मनोवश इति । १ इन्द्रियाणि तदधिष्ठातारो वा । २ योगिनामपि भयंकरो मनोलक्षणो देवः । ३ कुतः बलादपि बलवान् । ४ अतस्तं यो वशवर्तिनं कुर्यात् । ५ स एव सर्वेन्द्रियजेता भविता नान्यः । तथा च श्रुतिः—“ मनसो वशे सर्वमिदं बभूव नान्यस्य मनो वशमन्वियाय । भीष्मो हि देवः सहसः सहीयान् ” इति ॥ ४७ ॥ ६ अतोऽसह्या रागादयो वेगा यस्य तम् । ७ अतएवारुर्मर्म व्यथयतीति तम-जित्वा । ८ ततो ये केचिन्मर्त्यैः कैश्चिदसद्विग्रहं कुर्वन्ति। तत्र चानुकूलप्रतिकूलादीनन्यान्मित्रादीन्कुर्वन्ति ते मूढा इत्यर्थः ॥ ४८ ॥ ९ ततश्चानेन प्रकारेण संसारे भ्रमन्तीत्याह—देहमिति । मनोमात्रपरिकल्पितमिमं स्वदेहमहमिति पुत्रादिदेहं च ममेति स्वीकृत्य। १० संसारे ॥ ४९ ॥ ११ तदेवं मनस एव दुःखकारणत्वमुपपाद्येदानीं जनादीनां षण्णामकारणत्वं प्रपञ्चयति-जनस्त्विति षड्भिः॥ १२अस्मिन्नपि पक्षे आत्मनः किं न किञ्चित् सुखदुःखकर्मत्वं

हि [1]भौमयोस्तत् । [2]जिह्वां क्वचित्सन्दशति स्वदद्भि-
स्तद्वेदनायां कतमाय कुप्येत् ॥ ५० ॥ दुःखस्य
हेतुर्यदि देवतास्तु[3] किमात्मनस्तत्र[4] विकारयो[5]-
स्तत् । यदङ्गमं[6]ङ्गेन निहन्यते क्वचित्क्रुध्येत
कस्मै पुरुषः स्वदेहे ॥ ५१ ॥ आत्मा[7] यदि
स्यात्सुखदुःखहेतुः किमन्यतस्तत्र निजस्वभावः।
र्न[8] ह्यात्मनोऽन्यद्यदि तन्मृषा स्यात्क्रुध्येत

तत्कर्तृत्वं चेत्यर्थः । १ कुत इत्यत आह—निश्चितं विकारयोर्देहयोस्तन्न त्वात्मनः । अमूर्तस्याक्रियस्य च हननादिषु कर्मत्वकर्तृत्वानुपपत्तेः । २ तथापि दुःखमात्मपर्यवसाय्येवेति चेदेवमपि परमात्मन उभयत्राप्येकत्वान्न कोपविषयोऽस्तीति स्वदृष्टान्तेन दर्शयति—जिह्वामिति ॥ ५० ॥ ३ यदि देवता अस्तु नाम । ४ तत्रापि पक्षे आत्मनः किम् । ५ यतो विक्रियमाणयोर्देवयोस्तत्। ६ हस्तेन मुखेऽभिहते तेन वा हस्ते दष्टे तदभिमानिनोर्वह्नीन्द्रयोरेव तन्न त्वविक्रियस्यानहंकारस्य चात्मनः। देवतानां तु सर्वदेहेष्वभेदान्न कोपविषयोऽस्तीति स्वदेहदृष्टान्तेनाह—यद्यदा अङ्गं देवताधिष्ठानं हस्तमुखादि अतएव पूर्वत्र देवतानधिष्ठानरूपभूविकारदन्तोदाहरणम् ॥ ५१ ॥ २८ आत्मनः सुखदुःखाद्याकारपरिणामोऽतः स एव यदि हेतुः स्यात्तत्र पक्षे अन्यतः किं न किंचिदन्यतो भवति । यस्मै कुप्येदित्यर्थः । यतो निज एव स्वभावः सः । ८ नन्वात्मनस्तथा परिणामोऽन्यनिमित्तो भवत्यतोऽस्ति कोपविषय इति चेत्तत्राह—नहीति । आत्माव्यतिरिक्तं नास्त्येव । यदि स्यादस्तीति प्रतीयेत तर्हि तन्मृषैवातः कस्माद्धेतोः कुप्येत । यतो ना-

कस्मान्न सुखं न दुःखम्॥५२॥ग्रहा निमित्तं सुख-
दुःखयोश्चेत्किमात्मनोऽजस्य जनस्य ते वै।ग्रहैर्ग्र-
हस्यैव वदन्ति पीडां क्रुध्येत कस्मै पुरुषस्ततोऽन्यः
५३कर्मास्तु हेतुः सुखदुःखयोश्चेत्किमात्मनस्तद्धि
जडाजडत्वे। देहस्त्वचित्पुरुषोऽयं सुपर्णः क्रुध्येत
कस्मै न हि कर्म मूलम् ॥ ५४ ॥ कालस्तु हेतुः
सुखदुःखयोश्चेत्किमात्मनस्तत्र तदात्मकोऽसौ।ना-

स्ति निमित्तं नच सुखं दुःखं चेत्यर्थः ॥ ५२ ॥ १ ग्रहपक्षेऽप्यजस्यात्मनः किम्। २ देहस्यैव जन्मलग्नापेक्षया द्वादशाष्टमादिराशिस्थास्ते सुखदुःखयोर्हेतुर्भवन्ति। ३ किंच अन्तरिक्षस्थैर्ग्रहैस्तत्रस्थस्य ग्रहस्यैव पादार्धादिदृष्ट्यादिभेदैः पीडां वदन्ति दैवज्ञा न तु ग्रहकोणादिषु स्थितस्य तद्दृष्टचगोचरस्य पुरुषस्य। ग्रहगतैव तु पीडा तल्लग्नोत्पन्ने देहे तस्याभिमानाद्भवति। अतः पुरुषस्ततो ग्रहाद्देहाच्चान्यः कस्मै क्रुध्येत ॥ ५३ ॥ ४ कर्म हेतुश्चेदस्त्वित्यसूयोपगमं कर्मैव नास्ति कुतस्तस्य हेतुत्वमिति। ५ तदाह—हि यस्मात्कर्म एकस्य जडाजडत्वे सति स्यात् जडत्वाद्विकारित्वोपपत्तेः। अजडत्वाच्च हितानुसन्धानतः प्रवृत्तिसंभवात्। ६ जडो देहोऽतस्तस्य प्रवृत्तिर्न भवति। ७ शुद्धज्ञानस्वरूपोऽतः कस्मै क्रुध्येत। ८ यतः सुखदुःखयोर्मूलभूतं कर्मैव नास्तीति ॥ ५४ ॥ ९ तत्र कालपक्षेऽप्यात्मनः किम्।१० यतोऽसौ कालात्मक एव ब्रह्मांशत्वात्।११ स्वांशस्य स्वतः पीडा नास्तीत्यत्र दृष्टान्तः। नाग्नेर्हेतोस्तदंशस्य ज्वालादेस्तापो दाहतो नाशोऽस्ति तत्रोपाधि-

ग्नेर्हि तापो न हिमस्य[1] तत्स्यात्क्रुध्येत कस्मै न[2] परस्य द्वन्द्वम् ॥ ५५ ॥ न[3] केनचित्क्वापि कथञ्चनास्य द्वन्द्वोपरागः परतः परस्य। यथा[4]-ऽहमः संसृतिरूपिणः स्यादेवं प्रबुद्धो[5] न बिभेति भूतैः ॥ ५६ ॥ एतां[6] स आस्थाय परात्मनिष्ठा-मध्यासितां पूर्वतमैर्महर्षिभिः। अहं तरिष्यामि दुरन्तपारं तमो मुकुन्दाङ्घ्रिनिषेवयैव[7] ॥ ५७ ॥

श्रीभगवानुवाच ॥

निर्विद्य[8] नष्टद्रविणो गतक्रमः प्रव्रज्य गां पर्यट-

भूतकाष्ठांशदाहान्नाशः स्यादिति दृष्टान्तान्तरमाह–१ हिमस्य तच्छैत्यं तदंशस्य तुषारकणस्य नाशकं स स्यादित्यर्थः ·। २ किञ्च आस्तामंशत्वं वस्तुतः पर एवायं न च परस्य द्वन्द्वं सुखदुःखादिकमस्तीति ॥ ५५ ॥ ३ तदेवं षडेते हेतवः प्रसिद्धा निरस्ताः। यदि कश्चिद्धेत्वन्तरमुद्भावयेत्तदपि वस्तु महिमापेक्षायां न भवतीत्याह–न केनचिदिति। ४ नन्वपरोक्षः कथमपन्हूयते तत्राह-यथाहम इति। अविद्यमानामेव संसृतिं प्रकाशयतीति तस्याहङ्कारस्य यथा स्यान्न तथा परतः प्रकृतेः परस्यात्मनो द्वन्द्वसम्बन्धः। अहङ्कारनिमित्तोऽसौ न वास्तव इत्यर्थः। ५ एवं प्रबुद्धो यः स भूतैः कृत्वा न बिभेति ॥ ५६ ॥ ६ अतोऽहमपि तथैव परमार्थनिष्ठतयैव तरिष्यामीत्याह–एतामिति। सोह-मित्यन्वयः। ७ नन्वियं निष्ठैव कथं भवेत्तत्राह–मुकुन्देति ॥ ५७ ॥ ८ प्रस्तावेन सह गाथार्थं संक्षेपतो दर्शयति द्वाभ्याम् 'इत्थं क्षीणधनो निर्विद्य।

मान इत्थम्। निराकृतोऽसद्भिरपि स्वधर्माद-
कम्पितोऽमुं मुनिराह गाथाम् ॥ ५८ ॥ सुख-
दुःखप्रदो नान्यः पुरुषस्यात्मविभ्रमः । मित्रो-
[1]दासीनरिपवः संसारस्तमसः कृतः ॥ ५९ ॥
तस्मा[2]त्सर्वात्मना तात निगृहाण मनो धिया ।
मय्यावेशितया युक्त एतावान्योगसंग्रहः ॥ ६० ॥
य[3] एतां भिक्षुणा गीतां ब्रह्मनिष्ठां समाहितः ।
धारयञ्छ्रावयञ्छृण्वन्[4]द्वन्द्वैर्नैवाभिभूयते ॥ ६१॥

इति श्रीमद्भागवते एकादशस्कन्धे भगवदुद्धवसंवादे भिक्षुगीता नाम त्रयोविंशोऽध्यायः ॥ २३ ॥

---

गतक्लमः प्रव्रज्य गां पर्यटन्नसद्भिर्निराकृतोऽपि स्वधर्मादकम्पितः सन्मुनिमूं गाथामगायतेत्यन्वयः ॥५८॥ १ मित्रोदासीनारिपवः । सर्वोऽपि संसारस्तमसोऽज्ञानत आत्मनो मनसो विभ्रममात्रः कृतो न तात्त्विक इत्यर्थः॥५९॥ २ उक्तं द्वन्द्वसहनोपायमुपसंहरति—तस्मादिति ॥ ६० ॥ ३ मनोनिग्रहाशक्तोऽप्येतच्छ्रवणादिनिष्ठस्तत्फलं प्राप्नोतीत्याह—य इति । ४ सुखदुःखादिभिः॥ " भिक्षुगीतं मिषं कृत्वा भक्तचित्तगतं हरिः । मोहं निघ्नन्निहाभाति परमानन्दरूपतः " ॥ इति भिक्षुगीता सम्पूर्णा ॥



# श्रीमहागणपतिस्तोत्रम् ।



ॐ श्रीगणेशाय नमः । श्रीगणेशाय विश्वेशवैभवाद्भुत-केतवे । नमो निर्विघ्नमारब्धकार्यनिर्वाहहेतवे ॥ १ ॥ ओङ्कारमाद्यं प्रवदन्ति सन्तो वाचः श्रुतीनामपि यं गृणन्ति । गजाननं देवगणानताङ्घ्रिं भजेऽहमर्धेन्दुकृतावतंसम् ॥ २ ॥ पादारविन्दार्चनतत्पराणां संसारदावानलभङ्गदक्षम् । निरर्गलं निर्गतदानतोयैस्तं नौमि विघ्नेश्वरमम्बुदाभम् ॥ ३ ॥ कृताङ्गरागं नवकुङ्कुमेन मत्तालिमालां मदपङ्कमग्नाम् । निवारयन्तं निजकर्णतालैः को विस्मरेत्पुत्रमनङ्गशत्रोः ॥ ४ ॥ शम्भोर्जटाजूटनिवासिगङ्गाजलं समाधाय कराम्बुजेन । लीलाभिराराच्छिवमर्चयन्तं गजाननं भक्तियुता भजन्ति ॥ ५ ॥ कुमारभुक्तौ पुनरात्महेतोः पयोधरौ पर्वतराजपुत्र्याः । प्रक्षालयन्तं करशीकरेण मुग्धाननं नागमुखं भजामि ॥ ६ ॥ त्वया समुद्धृत्य गजास्यहस्तं ये शीकराः पुष्कररन्ध्रमुक्ताः । व्योमाङ्गने ते विचरन्ति ताराः कालात्मना मौक्तिकतुल्यभासाः ॥ ७ ॥ क्रीडारते वारिनिधौ गजास्ये वेलामतिक्रामति वारिपूरे । कल्पावसानं प्रविचिन्त्य देवाः कैलासनाथं स्तुतिभिः स्तुवन्ति ॥ ८ ॥ नागानने नागकृत्युत्तरीये क्रीडारतौ देवकुमारसङ्घैः । त्वयि क्षणं कालगतिं विहाय तौ प्रा-

पतुः कन्दुकताभिनेन्दू ॥ ९ ॥ मदोल्लसत्पञ्चमुखैरज-
स्रमध्यापयन्तं सकलागमार्थान् । देवानृषीन्भक्तजनै-
कमित्रं हेरम्बमर्कारुणमाश्रयामि ॥ १० ॥ पादाम्बुजा-
भ्यामतिवामनाभ्यां कृतार्थयन्तं कृपया धरित्रीम् । अ-
कारणं कारणमाप्तवाचां तं नागवक्त्रं न जहाति चेतः
॥ ११ ॥ येनार्पितं सत्यवतीसुताय पुराणमालिख्य
विषाणकोट्या । तं चन्द्रमौलेस्तनयं तपोभिरवाप्यमा-
नन्दघनं भजामि ॥ १२ ॥ पदं श्रुतीनामपदं स्तुतीनां
लीलावतारं परमष्टमूर्तेः । नागात्मको वा पुरुषात्मको
वेत्यभेद्यमाद्यं भज विघ्नराजम् ॥ १३ ॥ पाशाङ्कुशौ
भग्नरदं त्वभीष्टं करैर्दधानं कररन्ध्रमुक्तैः । मुक्ताफलाभैः
पृथुशीकरौघैः सिञ्चन्तमङ्गं शिवयोर्भजामि ॥ १४ ॥
अनेकमेकं गजमेकदन्तं चैतन्यरूपं जगदादिबीजम् ।
ब्रह्मेति यं वेदविदो वदन्ति तं शम्भुसूनुं शरणं भजा-
मि ॥ १५ ॥ स्वाङ्कस्थिताया निजवल्लभाया मुखाम्बु-
जालोकनलोलनेत्रम् । स्मेराननाब्जं मदवैभवेन भद्रं
भजे विश्वविमोहनं तम् ॥ १६ ॥ योऽपूर्वमाराध्य गजा-
नन त्वां सर्वाणि शास्त्राणि पठन्ति तेषाम् । त्वत्तो न
चान्यत्प्रतिपाद्यमेतैस्तत्रास्ति चेत्सर्वमसत्यकल्पम् ॥
॥ १७ ॥ हिरण्यगर्भं जगदीशितारं कविं पुराणं रवि-
मण्डलस्थम् । गजाननं यं प्रवदन्ति सन्तस्तत्काल-
योगैस्तमहं प्रपद्ये ॥ १८ ॥ वेदान्तगीतं पुरुषं भजेऽह-
मात्मानमानन्दघनं हृदिस्थम् । गजाननं यन्महसा ज-

नानां विघ्नान्धकारो विलयं प्रयाति ॥ १९ ॥ शम्भोः समालोक्य जटाकलापे शशाङ्कखण्डं निजपुष्करेण । स्वभग्नदन्तं प्रविचिन्त्य मौग्ध्यादाक्रष्टुकामश्शिवमातनोतु ॥ २० ॥ विघ्नार्गलानां विनिपातनार्थं यं नारिकेलैः कदलीफलाढ्यैः । प्रवादयन्तो मदवारणास्यं प्रापुर्नरोऽभीष्टमहं भजे तम् ॥ २१ ॥ यज्ञैरनेकैर्बहुभिस्तपोभिराराध्यमाद्यं गजराजवक्त्रम् । स्तुत्यानया ये विधिना स्तुवन्ति ते सर्वलक्ष्मीनिधयो भवन्ति ॥२२॥

इति श्रीमहागणपतिस्तोत्रं सम्पूर्णम् ॥

## अथ प्रातःकृत्यविधिः ।

ब्राह्मे मुहूर्ते शयनतलादुत्थाय करचरणौ प्रक्षाल्य निजासने समुपविश्य निजशिरसि श्वेतवर्णाधोमुखसहस्रदलकमलकर्णिकान्तर्गतचन्द्रमण्डलसिंहासनोपरि निषण्णं स्वगुरुं शुक्लवर्णं शुक्लालङ्कारभूषितं ज्ञानानन्दमुदितमानसं सच्चिदानन्दविग्रहं त्रिनयनं चतुर्भुजं ज्ञानमुद्रापुस्तकवराभयकरं वामाङ्के वामहस्तधृतकमलया रक्तवसनाभरणया स्वप्रियया दक्षिणभुजेनालिङ्गितं सर्वदेवादिदेवं परमशिवस्वरूपं शान्तं सुप्रसन्नं ध्यात्वा तच्चरणकमलयुगलविगलदमृतधारया स्वात्मानं प्लुतं विभाव्य मानसोपचारैराराध्य। लं भूम्यात्मकं गन्धं समर्पयामि नमः, हं आकाशात्मकं पुष्पं समर्पयामि नमः, वं वाय्वा-

त्मकं धूपं समर्पयामि नमः, रं वह्न्यात्मकं दीपं समर्पयामि नमः, वं अमृतात्मकं नानानैवेद्यं समर्पयामि नमः, सं सर्वात्मकानि फलताम्बूलानि समर्पयामि नमः॥ ॥"ॐ ऐंह्रींश्रींहसखफ्रें हसरक्षमलवयऊं सहखफ्रें सहक्षमलवरयऊं हसौंः स्हौंः श्रीमच्छ्री ( रमुक ) प्रेमानन्दकौलानन्दनाथश्रीपादुकां श्रीपद्मावत्यम्बापादुकां च पूजयामि नमः"॥ इति दशधा विमृश्य मनसा दण्डप्रणामं कुर्यात्॥

तत्र प्रणाममंत्रा यथा–ब्रह्मानन्दं परमसुखदं केवलं ज्ञानमूर्तिं द्वन्द्वातीतं गगनसदृशं तत्त्वमस्यादिलक्ष्यम्। एकं नित्यं विमलमचलं सर्वधीसाक्षिभूतं भावातीतं त्रिगुणरहितं सद्गुरुं तं नमामि॥ १॥ स्मारंस्मारं जनिमृतिभयं जातनिर्वेदवृत्तिर्ध्यायंध्यायं पशुपतिमुमाकान्तमन्तर्निषण्णम्।पायंपायं सपदि परमानन्दपीयूषधारां भूयोभूयो निजगुरुपदाम्भोजयुग्मं नमामि ॥२॥ यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ। तस्यैते कथिता ह्यर्थाः प्रकाश्यन्ते महात्मनः॥ ३ ॥ सहस्रदलपङ्कजे सकलशीतरश्मिप्रभं वराभयकराम्बुजं विमलगन्धदिव्याम्बरम्। प्रसन्नवदनेक्षणं सकलदेवतारूपिणं स्मरे शिरसि हंसगं तदभिधानपूर्वं गुरुम्॥ ४॥ नमामि सद्गुरुं शान्तं प्रत्यक्षं शिवरूपिणम्। शिरसा योगपीठस्थं मुक्तिकामार्थसिद्धये॥ ५॥ श्रीगुरुं परमानन्दं वन्दाम्यानन्दविग्रहम्। यस्य सान्निध्यमात्रेण चिदा-

नन्दायते परम् ॥ ६ ॥ अखण्डमण्डलाकारं व्याप्तं येन चराचरम् । तत्पदं दर्शितं येन तस्मै श्रीगुरवे नमः ॥ ॥ ७ ॥ अज्ञानतिमिरान्धस्य ज्ञानाञ्जनशलाकया । चक्षुरुन्मीलितं येन तस्मै श्रीगुरवे नमः ॥ ८ ॥ हरौ रुष्टे गुरुस्त्राता गुरौ रुष्टे न कश्चन । सर्वदेवस्वरूपाय तस्मै श्रीगुरवे नमः ॥ ९ ॥ गुरुर्ब्रह्मा गुरुर्विष्णुर्गुरुः साक्षान्महेश्वरः । गुरुरेव जगत्सर्वं तस्मै श्रीगुरवे नमः ॥ १० ॥ ध्यानमूलं गुरोर्मूर्तिः पूजामूलं गुरोः पदम् । ज्ञानमूलं गुरोर्वाक्यं मोक्षमूलं गुरोः कृपा ॥ ॥ ११ ॥ नमस्ते नाथ भगवञ्छिवाय गुरुरूपिणे । विद्यावतारसंसिद्ध्यै स्वीकृतानेकविग्रह ॥ १२ ॥ नवाय नवरूपाय परमार्थैकरूपिणे । सर्वाज्ञानतमोभेदभानवे चिद्घनाय ते॥ १॥स्वतंत्राय दयाकृतविग्रहाय परात्मने। परतंत्राय भक्तानां भव्यानां भव्यहेतवे ॥ १४ ॥ ज्ञानिनां ज्ञानरूपाय प्रकाशाय प्रकाशिनाम् । विवेकिनां विवेकाय विमर्शाय विमर्शिनाम् ॥ १५ ॥ पुरस्तात्पार्श्वयोः पृष्ठे नमस्कुर्याम्युपर्यधः । सदा मच्चित्तरूपेण विधेहि भवदासनम् ॥ १६ ॥ इति श्रीगुरुस्तुतिः ॥

इति श्रीगुरुं प्रणम्य सुप्रसन्नं विभाव्य मनसा तदाज्ञां गृहीत्वा मूलाधारे स्वर्णवर्णचतुर्दलकमलकर्णिकान्तर्गतशृङ्गाटकान्तर्गतत्रिकोणपीठोपरि मायाबीजसिंहासनस्थितां परां शक्तिं कुण्डलिनीं सर्पाकारामूर्ध्व-

मुर्खी सार्धत्रिवलयामुद्यद्दिनकरसहस्रभास्वरां विद्युत्कोटिसन्निभां बिसतन्तुतनीयसीं पञ्चाशद्वर्णविग्रहामष्टात्रिंशत्कलारूपिणीं त्रिधामधाम्नीं सर्वप्राणिजीवां सर्वदेवाधिदेवीं सकलमंत्रमातरं सुप्तां विभाव्य । श्रीगुरूपदिष्टनिजसहजनादेन सचैतन्यां विधाय । तत्र चतुर्दलेषु "वंनमः शंनमः षंनमः संनमः" इति पत्रेषु मध्ये मूलेन च प्रादक्षिण्येन सम्पूज्य । "हंस" इति कमलात्कमलं नीत्वा । ततः स्वाधिष्ठाने लिंगमूले विद्रुमवर्णे षड्दलकमले तां प्रापय्य तत्र "बंनमः भंनमः मंनमः यंनमः रंनमः लंनमः" इति पत्रेषु मध्ये मूलेन च प्रादक्षिण्येन सम्पूज्य ततो मणिपूरके नाभौ नीलवर्णे दशदलकमले तां नीत्वा तत्र "डंनमः ढंनमः णंनमः तंनमः थंनमः दंनमः धंनमः नंनमः पंनमः फंनमः" इति पत्रेषु मध्ये मूलेन च सम्पूज्य । ततोऽनाहते वक्षसि पिंगलवर्णे द्वादशदलकमले तां नीत्वा तत्र "कंनमः खंनमः गंनमः घंनमः ङंनमः चंनमः छंनमः जंनमः झंनमः ञंनमः टंनमः ठंनमः" इति पत्रेषु मध्ये मूलेन च सम्पूज्य । ततो विशुद्धौ कण्ठे धूम्रवर्णे षोडशदलकमले तां नीत्वा । तत्र "अंनमः आंनमः इंनमः ईंनमः उंनमः ऊंनमः ऋंनमः ॠंनमः ऌंनमः ॡंनमः एंनमः ऐंनमः ओंनमः औंनमः अंनमः अःनमः" इति पत्रेषु मध्ये मूलेन च सम्पूज्य । ततो भ्रूमध्ये आज्ञाचक्रे विद्युद्वर्णे द्विदलकमले "हंनमः क्षंनमः" इति पत्रयोर्मध्ये मूलेन च

सम्पूज्य । ततो द्वादशान्तचक्रब्रह्मरन्ध्रमध्यगतसहस्रदल-
कमलं प्रापय्य तत्र बिन्दुरूपतेजोमयपरमशिवेन सहैकतां
नीत्वा । ततः स्रवता परमामृतेन संतर्प्य तत्र नादश्रवण-
तत्परो मुहूर्तं लयं विभाव्य । ततोऽवरोहे सर्वत्र "सोऽह-
मिति" कमलात्कमलेऽवारोह्यमाणामाज्ञाचक्रादिक्रमेणतेषु
तेषु कमलेषु तैस्तैरक्षरैः सम्पूज्यमानां तत्तदाधारतत्तद्धातु-
तत्तद्वर्णतत्तदधिदेवताः संतर्पयन्तीं मूलाधारं प्रापय्य
तत्रैव स्वस्थाने संस्थापयेदित्यारोहावरोहक्रमेण परांशक्तिं
कुण्डलिनीं ध्यात्वा ॥ प्रकाशमाना प्रथमे प्रयाणे प्रतिप्र-
याणेऽप्यमृतायमानाम् । अन्तःपदव्यामनुसञ्चरन्तीमान-
न्दरूपामबलां प्रपद्ये॥ मूलाधारे वह्निमण्डलं दशकलात्मकं
विभाव्य । तत्र मूलविद्यायाः प्रथमकूटं स्फुरत्तडिल्लताभा-
स्वरमनाहतपर्यन्तप्राप्तनादशिखं विभाव्य । तथाऽनाहते
सूर्यमण्डलं द्वादशकलात्मकं ध्यात्वा तन्मध्ये मूलं
विद्याया द्वितीयकूटमुद्यदादित्यसंकाशमाज्ञाचक्रप-
र्यन्तप्राप्तनादशिखमध ऊर्ध्वं प्रसृतरश्मिकं ध्यात्वा । तत
आज्ञाचक्रे सोममण्डलं षोडशकलात्मकं विभाव्य तदन्तरे
मूलविद्यायास्तृतीयकूटं शशिप्रभं ब्रह्मरन्ध्रान्तर्गतबि-
न्दूर्ध्वमण्डलपर्यन्तप्राप्तनादशिखां विभाव्य चिन्त्य ततो
मूलादिब्रह्मरन्ध्रान्तं मूलविद्यामुद्यद्दिनकरसहस्रभास्वरां
तेजोमयीमखण्डां स्मृत्वा तत्तेजसा व्याप्तं स्वदेहं विभाव्य
तत्तेजसैव परिणतां श्रीपरदेवतां च हृदयकमले ध्यात्वा
प्राणायामत्रयं कुर्यात् ॥

तद्विधिर्यथा ॥ ॥ तत्र प्रणवं मूलं वा षोडशवारमुच्चरन् दक्षिणकराङ्गुष्ठेन दक्षिणनासापुटं निरुद्ध्य वामेन पुटेन पवनं पूरयेत् ॥ ततस्तमेव चतुष्षष्टिवारमुच्चरन् दक्षाऽनामाकनिष्ठिकाभ्यां वामं पुटं च निरुद्ध्य द्वाभ्यां पुटाभ्यां पवनं कुम्भयेत् ॥ ततस्तमेव द्वात्रिंशद्वारमुच्चरन् वामं पुटं तथैव निरुद्ध्य दक्षिणपुटेन पवनं शनैःशनै रेचयेदित्येकः प्राणायामः ॥ एष एव वैपरीत्येन क्रियमाणो द्वितीयः ॥ प्रथमवत्तृतीयः ॥ इति प्राणायामेन निरस्तसकलकलुषं स्वदेहं देवताराधनयोग्यं विभाव्य स्वमूलमन्त्रस्य ऋष्यादिस्मरणं विदधीत ॥

ॐअस्य श्रीमहात्रिपुरसुन्दरीमन्त्रस्य दक्षिणामूर्तिॠषिः पंक्ति छन्दः श्रीमहात्रिपुरसुन्दरी देवता ऐं प्रथमकूटं बीजम् सौः तृतीयकूटं शक्तिः।क्लीं द्वितियकूटं कीलकं मम श्रीचतुर्विधपुरुषार्थसिद्ध्ये जपे विनियोगः ॥ इति प्राञ्जलिः स्मृत्वा यथाविधि विन्यसेत् ॥ ॐऐंह्रींक्लीं ॐदक्षिणामूर्तये नमः शिरसि । ॐपंक्तिच्छन्दसे नमः मुखे । श्रीमहात्रिपुरसुन्दरीदेवतायै नमः हृदये । ॐ ऐं प्रथमकूटं बीजाय नमः गुह्ये । ॐ सौः तृतीयकूटं शक्तये नमः पादयोः। ॐक्लीं द्वितीयकूटं कीलकाय नमः नाभौ। ॐमम श्रीचतुर्विधपुरुषार्थसिद्धये न्यासे जपे विनियोग इति सर्वाङ्गेषु व्यापकं विन्यसेत् ॥ इति ऋष्यादीन्विन्यस्य करन्यासं कुर्यात् ॥ श्रींह्रीं-

क्लींऐंसौः अङ्गुष्ठाभ्यां नमः । ॐह्रींश्रींतर्जनीभ्यां स्वाहा । कएईलह्रींमध्यमाभ्यां वषट् । हसकहलह्रीं अनामिकाभ्यां हुम् । सकलह्रीं कनिष्ठिकाभ्यां वौषट् । सौः ऐंक्लींह्रींश्रीं करतलकरपृष्ठाभ्यां नमः फट् । इति करयोर्विन्यस्य हृदयादिषडङ्गेष्वेवमेव विन्यसेत् ॥ श्रींह्रींक्लींऐंसौः हृदयाय नमः । ॐह्रींश्रींशिरसे स्वाहा । कएईलह्रीं शिखायै वषट् । हसकहलह्रीं कवचाय हुम् । सकलह्रीं नेत्रत्रयाय वौषट् । सौःऐंक्लींह्रींश्रीं अस्त्राय फट् ॥ इति हृदयादिषु षडङ्गेष्वपि विन्यस्य निमील्य नयने स्वहृदयकमले स्वाभेदेन श्रीमहात्रिपुरसुन्दरीं ध्यायेत ॥ उत्तप्तहेमरुचिरां रविचन्द्रवह्निनेत्रां धनुःशरयुताङ्कुशकामपाशान् । रम्यैर्भुजैश्च दधतीं शिवशक्तिरूपां कामेश्वरीं हृदि भजे धृतचन्द्रचूडाम् ॥ इति श्रीमहात्रिपुरसुन्दरीं ध्यात्वा मानसैरुपचारैः सम्पूज्य सुप्रसन्नां विभाव्य शिरसि श्रीगुरुं कण्ठे मूलविद्यां हृदि श्रीमहात्रिपुरसुन्दरीं ध्यायन्मालामाधाय तामपि मनसा सम्पूज्य ॥ ॐमांमाले महामाये सर्वशक्तिस्वरूपिणि । चतुर्वर्गस्त्वयि न्यस्तस्तस्मान्मे सिद्धिदा भव ॥ ॐसिद्ध्यै नमः ॥ इति मनसा गन्धादिना पूजितां मालामादाय यथाशक्तितया जपं विधाय ॥ त्वं माले सर्वदेवानां प्रीतिदा शुभदा सदा । शुभं कुरुष्व मे भद्रे यशो वीर्यं च सर्वदा ॥ इति हृदन्तः पठित्वा पुनरपि प्राणायामऋष्यादिस्मरणकरषडङ्गन्यासान्विधाय । ॐगुह्या-

तिगुह्यगोत्री त्वं गृहाणास्मत्कृतं जपम् । सिद्धिर्भवतु मे देवि त्वत्प्रसादान्महेश्वरि । इत्यनेन तेजोमयं जपफलं देवतावामहस्ते समर्प्य ॥ "प्रातर्नमामि जगतां जनन्याश्चरणाम्बुजम् । श्रीमत्त्रिपुरसुन्दर्याः प्रणताया हरादिभिः ॥ १ ॥ प्रातस्त्रिपुरसुन्दर्या नमामि चरणाम्बुजम् । हरिर्हरो विरिञ्चिश्च सृष्टयादीन् कुरुते यया ॥ २ ॥ प्रातस्त्रिपुरसुन्दर्या नमामि पदपङ्कजम् । यत्पाद्यमम्बु-शिरसि भाति गङ्गा महेशितुः ॥ ३ ॥ प्रातः पाशाङ्कुशशरचापहस्तां नमाम्यहम् । उद्यदादित्यसंकाशां श्रीमत्त्रिपुरसुन्दरीम् ॥ ४ ॥ प्रातर्नमामि पादाब्जं ययेदं भासते जगत् । तस्यास्त्रिपुरसुन्दर्या यत्प्रसादान्निवर्तते ॥ ५ ॥ यःश्लोकपञ्चकमिदं प्रातर्नित्यं पठेन्नरः । तस्मै दद्यादात्मपदं श्रीमत्त्रिपुरसुन्दरी ॥ ६ ॥ " इति स्मृत्वा प्रणम्य । "प्रातःप्रभृति सायान्तं सायादि प्रातरन्ततः । यत्करोमि जगद्योने तदस्तु तव पूजनम्" । इति कृत्यं समर्प्य स्वकार्यानुष्ठानाय ॥ "त्रैलोक्यचैतन्यमये सुरेशि श्रीसुन्दरि त्वच्चरणाज्ञयैव । प्रातः समुत्थाय तव प्रियार्थं संसारयात्रामनुवर्तयिष्ये ॥ १ ॥ संसारयात्रामनुवर्तमानं त्वदाज्ञया श्रीत्रिपुरे सुरेशि । स्पर्धातिरस्कारकलिप्रमादभयानि मां माभिभवन्तु मातः ॥ २ ॥ जानामि धर्मं नच मे प्रवृत्तिर्जानाम्यधर्मं नच मे निवृत्तिः । त्वया हृषीकेशि हृदिस्थयाहं यथा नियुक्तोऽस्मि तथा करोमि ॥ ३ ॥"

इति श्रीदेव्याज्ञां संप्रार्थ्य ॥ मूलाधारादि द्वादशान्तपर्यन्तचक्रस्थिताभ्यो गणपतिप्रभृतिदेवताभ्यो गुरूपदेशज्ञानं सहजासिद्धमजपाजपम् ॥" ॐअद्य पूर्वेद्युरहोरात्राचरितमुच्छ्वासनिःश्वासात्मकं षट्शताधिकमेकविंशतिसहस्रसङ्ख्याकमजपाजपं मूलाधारस्वाधिष्ठानमणिपूरकानाहतविशुद्धाज्ञाचक्रब्रह्मरन्ध्रेषु चतुर्दलषड्दलदशदलद्वादशदलषोडशदलद्विदलसहस्रदलेषु स्वर्णविद्रुमनीलपिङ्गलधूम्रविद्युत्कर्बुरवर्णेषु स्थिताभ्यो गणपतिब्रह्मविष्णुरुद्रजीवात्मपरमात्मश्रीगुरुपादुकाभ्यो यथाभागशः समर्पयिष्यामि" । इति कृताञ्जलिः संकल्प्य समर्पयेत् ॥ ॐऐंह्रींश्रीं ॐमूलाधारचक्रस्थाय गणपतये अजपाजपानां षट्शतानि समर्पयामि नमः । ॐस्वाधिष्ठानचक्रस्थाय ब्रह्मणे अजपाजपानां षट्सहस्राणि समर्पयामि नमः। ॐ मणिपूरकचक्रस्थाय विष्णवे अजपाजपानां षट्सहस्राणि समर्पयामि नमः । ॐअनाहतचक्रस्थाय रुद्राय अजपाजपानां षट्सहस्राणि समर्पयामि नमः । ॐविशुद्धचक्रस्थाय जीवात्मने अजपाजपानां सहस्रं समर्पयामि नमः । ॐआज्ञाचक्रस्थाय परमात्मने अजपाजपानां सहस्रं समर्पयामि नमः । ॐऐंह्रींश्रींद्वादशान्तचक्रसहस्रदलकमलकर्णिकामध्यवर्तिन्यै श्रीगुरुवरपादुकायै अजपाजपानां सहस्रमर्पयामि नमः॥ एतावत्कर्तुमशक्त-

श्चेत् । "ॐअद्य मया पूर्वेद्युरहोरात्राचरितमुच्छ्वासनिः-श्वासात्मकं षट्शताधिकमेकविंशतिसहस्रसंख्याकम-जपाजपं ब्रह्मरन्ध्रस्थसहस्रदलकमलकर्णिकामध्यस्था-यै श्रीगुरुवरपादुकायै समर्पयामि नमः" । इति गुरु-पदे समर्पयेत् ॥ इत्यजपां समर्प्य ॥ "ॐ अद्य सूर्योद-यादारभ्यागामिसूर्योदयं यावदहोरात्रेण उच्छ्वासनिः-श्वासात्मकं षट्शताधिकमेकविंशतिसहस्रसंख्याकम-जपाजपमहं करिष्ये" इति कृताञ्जलिः समर्प्य अज-पामन्त्रेण प्राणायामं विधाय । ॐ हंसात्मने ऋषये नमः स्वशिरसि । ॐअव्यक्ताय गायत्रीच्छन्दसे नमः मुखे । ॐपरमहंसायै देवतायै नमः हृदये । ॐहं बीजाय नमः मूलाधारे । ॐसः शक्तये नमः पादयोः। ॐसोऽहं कील-काय नमः नाभौ । ॐॐकारतत्त्वाय नमः हृदये । ॐ उदात्ताय स्वराय नमःकण्ठे । ॐनभसे स्थानाय नमः मूर्ध्नि । ॐहैमाय वर्णाय नमः सर्वाङ्गेषु। इति विन्यस्य मम चतुर्विधपुरुषार्थसिद्धये जपे विनियोगः" । इति कृताञ्जलिर्वदेत् ॥ ततः । ॐ हसाःसूर्यात्मने स्वाहा अङ्गुष्ठाभ्यांनमः। ॐ हसीं सोमात्मने स्वाहा तर्जनीभ्यां स्वाहा । ॐहसूं निरञ्जनात्मने स्वाहा मध्यमाभ्यां वषट् । ॐहसैं निराभासात्मने स्वाहा अनामिकाभ्यां हुम्। ॐहसौं अनन्ततनुः सूक्ष्मादेवी प्रचोदयात्स्वाहा कनिष्ठाभ्यां वौषट् । ॐहसः अव्यक्तबोधात्मने स्वाहा करतलकरपृष्ठाभ्यां फट्।इति विन्यस्य ध्यानं कुर्यात

द्यौर्मूर्धानं यस्य विप्रा वदन्ति खं वै नाभिं चन्द्र-
सूर्यौ च नेत्रे । दिग्भिः श्रोत्रं यस्य पादौ क्षितिश्च
ध्यातव्योऽसौ सर्वभूतान्तरात्मा ॥ इति विराट्-
स्वरूपं स्वात्मानं ध्यात्वा तदनुसन्धायी प्राणवायो-
र्गमप्रवेशात्मकमजपामन्त्रं पञ्चविंशतिवारं जप्त्वा सम-
र्प्य ॥ गुरूपदिष्टमार्गेण नादानुसन्धानपूर्वकनिरस्त-
समस्तोपाधिकेनापि चिद्विलासेन प्रवर्तमानोऽस्मीति
विभाव्य स्वकार्यानुष्ठानाय । "समुद्रमेखले देवि पर्वत-
स्तनमण्डले । विष्णुपत्नि नमस्तुभ्यं पादस्पर्शं क्षमस्व
मे" इति प्रार्थयेत् ।

इति प्रातःकृत्यविधिः ।

---

# अथ महागायत्रीस्तुतिः ।



ॐ सदा गवेषयञ्जगत्त्रयेषु वेदमातरं चिदात्मना कृत-
स्थितिं समत्र चाद्य लब्धवान् । उदस्रु गद्गदं महोदया-
त्प्रणौमि भक्तिनौकया सुदुस्तरं द्रुतं तितीर्षुरापदर्ण-
वम् ॥ १ ॥ सुदीनलोकपातिनी सतां कृपाऽतिशो-
भते ह्यतः सुधांशुचक्षुषेक्षयाम्ब मादृशं जनम् । नवापि
हीयते तवेषदीशि पालनेन नो भवाद्यतः कुपुत्रता
न भासते प्रसूहृदि ॥ २ ॥ नमामि मुक्तविद्रुमप्रततहा-
टकाऽसितावदातवर्णसुन्दरैः षडर्धलोललोचनैः। सरो-

जषण्डबान्धवप्रदीप्तपावकप्रभैः किरीटरत्नरञ्जितैः सु-
धांशुखण्डमण्डितैः ॥३॥ मुखैर्दशार्धसंमितैर्विराजमान-
विग्रहां सुरेशचापसप्रभां समस्तदेववन्दिताम् ॥ वरा-
भयाङ्कुशान्वितैः कृपालशूलशङ्खचक्रसारसद्वयीगु-
णाङ्कितैः करैर्विराजिताम् ॥४॥ भवद्रुमस्य मूलतां गतां
मुनीन्द्रवन्दितामखण्डभावमण्डलप्रकाशकारिणीं शि-
वाम् । समस्तदेवतामयीं समस्तसिद्धिदायिनीमपूर्व-
रूपविग्रहां सरस्वतीं भवार्तिहाम् ॥ ५ ॥ शुचीन्दुसूर्य-
लोचनां शुचीन्दुसूर्यविग्रहां शुचीन्दुसूर्यसङ्गम-
स्वभावशालिनीं शुभाम् । पदद्वयानुकम्पित-
स्वशक्तिचक्रसेवितां परेशशक्तिमुत्तमां भजे त्रिलोक-
सुन्दरीम् ॥ ६ ॥ महामहेश्वरी जगद्विसर्गसुस्थितिक्षय-
स्वतन्त्रता शरीरिणी बभूव या महेशितुः । द्विपत्रिता-
दिभेदतो लतायमानविग्रहा त्रयीश्वरी सदा तु सा ज-
गज्जयाय जायताम् ॥ ७ ॥ नमामि तन्मुखारविन्दप-
द्मकं मलापहं गलैकनालकं सदा विकासि भक्तिसम्भ-
वम् । स्वभक्तहंससेवितं शुचीन्दुपद्मबन्धवः प्रतीकभूत-
विग्रहा गता हि यत्र पञ्चताम् ॥ ८ ॥ भवार्णवेऽतिदुः-
सहस्मराधिदिग्धमानसं षडूर्मिनित्यपीडितं जनं दि-
धीर्षुमानसा । श्रुतिध्वनिस्फुरन्मुखारविन्दभूसुरैः सदा
त्रिसन्ध्यमीश्वरी नुताऽस्तु सा सुखप्रदा हि नः ॥ ९ ॥
त्रयीप्रसूःस्वदृष्टिपातधूतभक्तकल्मषा समैर्जनैर्नुता मुदा

स्ववर्णधर्मभेदतः। निलिम्पनिम्नगामिषेण पादधौतजं जलं यदीयमागतं क्षितिं तनोतु नः शिवं तु सा॥१०॥ स्वदम्भवञ्चिताखिलं कुभोगसक्तमानसं सदाऽशुचिं कुमार्गगं शठं च शंकसे यदि। कथं स्वपादचिन्तनो-त्थवैभवं नहीश्वरि यतोऽङ्घ्रिचिन्तकं दयादृशेक्षसे न मादृशम् ॥ ११ ॥ अनेकदोषदूषितेषुनिर्विवेचना सती स्वतन्त्रशक्तिरीश्वरी भवाघनाशकारिणी । कृपामयीं दृशं विधाय सा स्वभक्तिपात्रितं स्वपत्कजे मधुव्रतं करोतु मामहर्निशम् ॥ १२ ॥ त्रिसन्ध्यमिष्टदैवतं सुके-शवास्यजं स्तवं स्मरन्हृदीद्धभावनो विधाय वेदमात-रम्। विधूय पापसञ्चयं वितीर्य कीर्तिमुत्तमामिह त्वमुत्र केवलं पदं स याति निर्भयम् ॥ १३ ॥

इति गायत्रीलीलास्तुतिः ॥

---

# अथ मुकुन्दमाला ।



ॐ वन्दे मुकुन्दमरविन्ददलायताक्षं कुन्देन्दुशङ्खदशनं शिशुगोपवेषम् । इन्द्रादिदेवगणवन्दितपादपीठं वृन्दावनालयमहं वसुदेवसूनुम् ॥१॥ श्रीवल्लभेति वर-देति दयापरेति भक्तप्रियेति भवलुण्ठनकोविदेति ।

नाथेति नागशयनेति जगन्निवासेत्यालापिनं प्रतिदिनं कुरु मां मुकुन्द॥ २ ॥ जयतु जयतु देवो देवकीनन्दनोऽयं जयतु जयतु कृष्णो वृष्णिवंशप्रदीपः । जयतु जयतु मेघश्यामलः कोमलाङ्गो जयतु जयतु पृथ्वीभारनाशो मुकुन्दः ॥ ३ ॥ मुकुन्द मूर्ध्ना प्रणिपत्य याचे भवन्तमेकान्तमियन्तमर्थम् । अविस्मृतिस्त्वच्चरणारविन्दे भवे भवे मेऽस्तु भवत्प्रसादात् ॥ ४ ॥ श्रीमुकुन्दपदाम्भोजमधुनः परमाद्भुतम् । यत्पायिनो न मुह्यन्ति मुह्यन्ति यदपायिनः ॥ ५ ॥ नाहं वन्दे तव चरणयोर्द्वन्द्वमद्वन्द्वहेतोः कुम्भीपाकं गुरुमपि हरे नारकं नापनेतुम् । रम्यारामामृदुतनुलतानन्दने नापि रन्तुं भावे भावे हृदयभवने भावयेयं भवन्तम् ॥ ६ ॥ नास्था धर्मे न वसुनिचये नैव कामोपभोगे यद्यद्भव्यं भवतु भगवन्पूर्वकर्मानुरूपम् । एतत्प्रार्थ्यं मम बहुमतं जन्मजन्मान्तरेऽपि त्वत्पादाम्भोरुहयुगगता निश्चला भक्तिरस्तु ॥ ७ ॥ दिवि वा भुवि वा ममास्तु वासो नरके वा नरकान्तक प्रकामम् । अवधीरितशारदारविन्दौ चरणौ ते मरणेऽपि चिन्तयामि ॥ ८ ॥ सरसिजनयने सशंखचक्रे मुरभिदि मा विरमेह चित्त रन्तुम् । सुखतरमपरं न जातु जाने हरिचरणस्मरणामृतेन तुल्यम् ॥ ९ ॥ मा भैर्मन्दमनो विचिन्त्य बहुधा यामीश्चिरं यातना नामी नः प्रभवन्ति पापरिपवः

स्वामी ननु श्रीधरः। आलस्यं व्यपनीय भक्तिसुलभं ध्यायस्व नारायणं लोकस्य व्यसनापनोदनकरो दासस्य किं न क्षमः ॥ १० ॥ भवजलधिमगाधं दुस्तरं निस्तरेयं कथमहमिति चेतो मास्म गाः कातरत्वम्। सरसिजदृशि देवे तावकी भक्तिरेका नरकभिदि निषण्णा तारयिष्यत्यवश्यम् ॥ ११ ॥ तृष्णातोये मदनपवनोद्धूतमोहोर्मिमाले दारावर्ते तनयसहजग्राहसङ्घाकुले च। संसाराख्ये महति जलधौ मज्जतां नस्त्रिधामन् पादाम्भोजे वरद भवतो भक्तिनावे प्रसीद ॥१२॥ पृथ्वी रेणुरणुः पयांसि कणिका फल्गुः स्फुलिङ्गो लघुस्तेजो निःश्वसनं मरुत्तनुतरं रन्ध्रं सुसूक्ष्मं नभः। क्षुद्रा रुद्रपितामहप्रभृतयः कीटाः समस्ताः सुरा दृष्टे यत्र स तावको विजयते भूमावधूतावधिः ॥ १३ ॥ आम्नायाभ्यसितान्यरण्यरुदितं कृच्छ्रव्रतान्यन्वहं मेदच्छेदफलानि पूर्तविधयः सर्वे हुतं भस्मनि । तीर्थानामवगाहनानि च गजस्नानं विना यत्पदद्वन्द्वाम्भोरुहसंस्तुतिं विजयते देवः स नारायणः ॥ १४ ॥ भवजलधिगतानां द्वन्द्ववाताहतानां सुतदुहितृकलत्रत्राणभारावृतानाम्। विषमविषयतोये मज्जतामप्लवानां भवति शरणमेको विष्णुपोतो नराणाम् ॥ १५ ॥ रजसि निपतितानां मोहजालावृतानां जननमरणधूलीदुर्गतिं सङ्गतानाम। शरणमशरणानामेक एवातुराणां कुशलपथि नियोक्ता चक्रपाणिर्नराणाम् ॥ १६ ॥ अपराधसहस्र-

सङ्कुलं पतितं भीमभवार्णवोदरे। अगतिं शरणागतं हरे कृपया केवलमात्मसात्कुरु ॥ १७ ॥ यच्चिन्तितं च मनसा वचसा निरुक्तं चक्षुःकरश्रवणपादविचेष्टितं च। यद्यन्निशासु दिवसेषु कृतं मयैव तत्तज्जनार्दन तवार्चनमेव भूयात् ॥१८॥ मा मे स्त्रीत्वं मा च मे दासभावो मा मूर्खत्वं मा कुदेशेषु जन्म। मिथ्यादृष्टिर्मा च मे स्यात्कदाचिज्जातौ जातौ विष्णुभक्तो भवामि ॥ १९ ॥ आनन्द गोविन्द मुकुन्द राम नारायणानन्त निरामयेति। वक्तुं समर्थोऽपि न वक्ति कश्चिदहो जनानां व्यसनानि मोक्षे ॥ २० ॥ क्षीरसागरतरङ्गशीकरासारतारकितचारुमूर्तये। भोगिभोगशयनीयशायिने माधवाय मधुविद्विषे नमः ॥ २१ ॥ क्षीरसारमपनीय शङ्कया स्वीकृतं यदि पलायनं त्वया। मानसे मम नितान्ततामसे नन्दनन्दन कुतो न लीयसे ॥ २२ ॥ वात्सल्यादभयप्रदानसमयादार्तार्तिनिर्वापणादौदार्यादघशोषणादगणितश्रेयःपदप्रापणात्। सेव्यः श्रीपतिरेव सर्वजगतामेकान्ततः साक्षिणः प्रह्लादश्च विभीषणश्च करिराट् पाञ्चाल्यहल्या ध्रुवः ॥ २३ ॥ नाथे श्रीपुरुषोत्तमे त्रिजगतामेकाधिपे चेतसा सेव्ये स्वस्य पदस्य धातरि परे नारायणे तिष्ठति। यं कञ्चित्पुरुषाधमं कतिपयग्रामेशमल्पार्थदं सेवायै मृगयामहे नरमहो मूढा वराका वयम् ॥ २४ ॥ हे लोकाः शृणुत प्रसू-

तिमरणव्याधेश्चिकित्सामिमां योगज्ञाः समुदाहरन्ति मुनयो यां याज्ञवल्क्यादयः । अन्तर्ज्योतिरमेयमेकममृतं कृष्णाख्यमापीयतां तत्पीतं परमौषधं वितनुते निर्वाणमात्यन्तिकम् ॥ २५ ॥ बद्धेनाञ्जलिना नतेन शिरसा गात्रैः सरोमोद्गमैः कण्ठेन स्वरगद्गदेन नयनोद्गीर्णेन बाष्पाम्बुना । नित्यं त्वच्चरणारविन्दयुगलध्यानामृतास्वादिनामस्माकं सरसीरुहाक्ष सततं सम्पद्यतां जीवितम् ॥ २६ ॥ तत्त्वं ब्रुवाणानि परं परस्मादहो क्षरन्तीव सुधां पदानि । आवर्तय प्राञ्जलिरस्मि जिह्वे नामानि नारायणगोचराणि ॥ २७ ॥ इदं शरीरं परिणामपेशलं पतत्यवश्यं श्लथसन्धिजर्जरम् । किमौषधैः क्लिश्यसि मूढ दुर्मते निरामयं कृष्णरसायनं पिब ॥२८॥ श्रीमन्नाम प्रोच्य नारायणाख्यं के न प्राप्ता वाञ्छितं पापिनोऽपि । हा नः पूर्वं वाक्प्रवृत्ता न तस्मिंस्तेन प्राप्तं गर्भवासादिदुःखम् ॥ २९ ॥ मा द्राक्षं क्षीणपुण्यान्क्षणमपि भवतो भक्तिहीनान्पदाब्जे मा श्रौषं श्राव्यबद्धं तव चरितमपास्यान्यदाख्यानजातम् । मा स्प्राक्षं माधव त्वामपि भुवनपतिं चेतसाऽपह्नुवानं माभूवं त्वत्सपर्याव्यतिकररहितो जन्मजन्मान्तरेऽपि॥३०॥ मदन परिहर स्थितिं मदीये मनसि मुकुन्द पदारविन्दधाम्नि । हरनयनकृशानुना कृशोऽसि स्मरसि न चक्रपराक्रमं मुरारेः॥३१॥दारा वाराकरवरसुता तेऽङ्गजोऽयं वि-

रिश्चिः स्तोता वेदास्तव सुरगणो भृत्यवर्गः प्रसादः। मुक्ति
र्मध्ये जगदविकलं तावकी देवकीयं माता मित्रं बल-
रिपुसुतस्तत्त्वतोन्यन्न जाने ॥३२॥ जिह्वे कीर्तय केशवं
मुररिपुं चेतो भज श्रीधरं पाणिद्वन्द्व समर्चयाच्युत
कथाः श्रोत्रद्वय त्वं शृणु । कृष्णं लोकय लोचनद्वय
हरेर्गच्छाङ्घ्रियुग्मालयं जिघ्र घ्राण मुकुन्दपादतुलसीं
मूर्धन्नमाधोक्षजम् ॥ ३३ ॥ यत्कृष्णप्रणिपातधूलि-
धवलं तद्वै शिरः स्याच्छुभं ते नेत्रे तमसोज्झिते सुरु-
चिरे याभ्यां हरिर्दृश्यते । सा बुद्धिर्नियमैर्यमैश्च विमला
या माधवध्यायिनी सा जिह्वाऽमृतवर्षिणी प्रतिपदं या
स्तौति नारायणम् ॥ ३४ ॥ भक्तद्वेषभुजङ्गगारुडमणि-
स्त्रैलोक्यरक्षामणिर्गोपीलोचनचातकाम्बुदमणिः सौ-
न्दर्यमुद्रामणिः । श्रीकान्तामणिरुक्मिणीघनकुचद्व-
न्द्वैकभूषामणिः श्रेयो ध्येयशिखामणिर्दिशतु नो गोपा-
लचूडामणिः ॥ ३५ ॥ शत्रुच्छेदैकमन्त्रं सकलमुपनि-
षद्वाक्यसम्पूज्यमन्त्रं संसारोत्तारमन्त्रं समुदिततम-
सां संघनिर्याणमन्त्रम् । सर्वैश्वर्यैकमन्त्रं व्यसनभुज-
गसन्दष्टसन्त्राणमन्त्रं जिह्वे श्रीकृष्णमन्त्रं जप जपसततं
जन्मसाफल्यमन्त्रम् ॥ ३६ ॥ व्यामोहोद्दलनौषधं मु-
निमनोवृत्तिप्रवृत्त्यौषधं दैत्यानर्थकरौषधं त्रिभुवने
सञ्जीवनैकौषधम् । भक्तार्तिप्रशमौषधं भवभय-
प्रध्वंसि दिव्यौषधं श्रेयःप्राप्तिकरौषधं पिब मनः श्रीकृ-

ष्णनामौषधम् ॥ ३७ ॥ आश्चर्यमेतद्धि मनुष्यलोके
सुधां परित्यज्य विषं पिबन्ति । नामानि नारायण-
गोचराणि त्यक्त्वान्यवाचः कुहकाः पठन्ति ॥ ३८ ॥
लाटी नेत्रपुटी पयोधरघटी क्रीडाकुटी दोस्तटी पाटी-
रद्रुमवर्णनेन कविभिर्मूढैर्दिनं नीयते । गोविन्देति ज-
नार्दनेति जगतां नाथेति कृष्णेति च व्याहारैः समय-
स्तदेकमनसां पुंसां परिक्रामति ॥ ३९ ॥ अयाच्यमक्रेय-
मयातयाममपाच्यमक्षय्यमदुर्भरं मे । अस्त्येव पाथेयम-
तिप्रयाणे श्रीकृष्णनामामृतभागधेयम् ॥ ४० ॥ यस्य
प्रियौ श्रुतिधरौ रविलोकगीतौ मित्रे द्विजन्मपरिवा-
रशिवावभूताम् । तेनाम्बुजाक्षचरणाम्बुजषट्पदेन
राज्ञा कृता स्तुतिरियं कुलशेखरेण ॥ ४१ ॥

इति मुकुन्दमालास्तुतिः ॥

---

# अथ श्रीकृष्णलीलास्तुतिः ।

निगमतरोः प्रतिशाखं मृगितं च मया परं ब्रह्म । मि-
लितमिदानीमङ्के गोकुलपङ्केरुहाक्षीणाम् ॥ १ ॥ तप्तं
तपोभिरन्यैः फलितं च तद्गोपबालानाम् । आसां य-
त्कुचकुम्भे नीलनिचोलायते परम्ब्रह्म ॥ २ ॥ श्रुतिमपरे
स्मृतिमपरे भारतमन्ये भजन्तु भवभीताः । अहमपि

नन्दं वन्दे यस्यालिन्दे परम्ब्रह्म ॥ ३ ॥ किं कथयामः कस्मै कस्य मनः प्रत्ययमाधत्ते । रमयति गोपवधूटी-कुञ्जकुटीरे परम्ब्रह्म ॥ ४ ॥ नीतंनीतं नवनवनीतं केन च पीतं पयः क्व मे मुरली । इति समुदीर्य लुठन्तं भूमौ बालं नमामि गोपालम् ॥ ५ ॥ पश्यत बलमब-लानामनाविले हृद्बिले बबन्धुर्याः । तनुदृष्टिपातर-श्म्याऽकृष्टममूर्तं परम्ब्रह्म ॥ ६ ॥ एतत्त्वामहमर्थयामि सततं रे चित्त ! चिन्तातुर मा चिन्तां कुरु चञ्चलेषु विषयेष्वागारदारादिषु । गायन्तं यमुनातटद्रुमतले नीलाम्बुदश्यामलं गोपालं वनमालिनं कमलिनं न-न्दात्मजं चिन्तय ॥ ७ ॥ ध्यानाभ्यासवशीकृतेन मन-सा तन्निर्गुणं निष्क्रियं ज्योतिः किंचन योगिनो यदि परं पश्यन्ति पश्यन्तु ते । अस्माकं तु तदेव लोचनच-मत्काराय भूयाच्चिरं कालिन्दीपुलिनेषु तत्किमपि यन्नीलं तमो धावति ॥ ८ ॥

इति कृष्णलीलास्तुतिः ॥

---

# अथ गोविन्दाष्टकम् ।



सत्यं ज्ञानमनन्तं नित्यमनाकाशं परमाकाशं गोष्ठप्राङ्ग-णरिङ्गणलोलमनायासं परमायासम् । मायाकल्पितना-

नाकारमनाकारं भुवनाकारं क्ष्मामानाथमनाथं प्रणमत गोविन्दं परमानन्दम् ॥ १ ॥ मृत्स्नामत्सीहेति यशोदाताडनशैशवसन्त्रासं व्यादितवक्त्रालोकितलोकालोकचतुर्दशलोकालिम्। लोकत्रयपुरमूलस्तम्भं लोकालोकमनालोकं लोकेशं परमेशं प्रणमत गोविन्दं परमानन्दम् ॥ २ ॥ त्रैविष्टपरिपुवीरघ्नं क्षितिभारघ्नं भवरोगघ्नं कैवल्यं नवनीताहारमनाहारं भुवनाहारम्। वैमल्यस्फुटचेतोवृत्तिविशेषाभासमनाभासं शैवं केवलशान्तं प्रणमत गोविन्दं परमानन्दम् ॥ ३ ॥ गोपालं प्रभुलीलाविग्रहगोपालं कुलगोपालं गोपीखेलनगोवर्धनधृतिलीलालालितगोपालम्। गोभिर्निगदितगोविन्दस्फुटनामानं बहुनामानं गोपीगोचरदूरं प्रणमत गोविन्दं परमानन्दम्॥४॥गोपीमण्डलगोष्ठीभेदं भेदावस्थमभेदाभं शश्वद्गोखुरनिर्धूतोद्धतधूलीधूसरसौभाग्यम्। श्रद्धाभक्तिगृहीतानन्दमचिन्त्यं चिन्तितसद्भावं चिन्तामणिमणिमानं प्रणमत गोविन्दं परमानन्दम् ॥५॥ स्नानव्याकुलयोषिद्वस्त्राण्यादायागमुपारूढं व्यादित्सन्तीरथ दिग्वस्त्रा वस्त्रं दातुमुपाकर्षन्तं ताः। निर्धूतद्वयशोकविमोहं बुद्धं बुद्धेरन्तःस्थं सत्तामात्रशरीरं प्रणमत गोविन्दं परमानन्दम् ॥ ६ ॥ कान्तं कारणकारणमादिमनादिं कालघनाभासं कालिन्दीगतकालियशिरसि नृत्यन्तं मुहुर्नृत्यन्तम्। कालं कालकलातीतं कलिताशेषं कलिदोषघ्नं कालत्रयगतिहेतुं

प्रणमत गोविन्दं परमानन्दम् ॥ ७ ॥ वृन्दावनभुवि वृन्दारकगणवृन्दाराधितवन्देऽहं कुन्दाभामलमन्दस्मेरसुधानन्दं सुहृदानन्दम् । वन्द्याशेषमहामुनिमानसवन्द्यानन्दपदद्वन्द्वं वन्द्याशेषगुणाब्धिं प्रणमत गोविन्दं परमानन्दम् ॥ ८ ॥ गोविन्दाष्टकमेतदधीते गोविन्दार्पितचेता यो गोविन्दाच्युत माधवविष्णो गोकुलनायक कृष्णेति । गोविन्दाङ्घ्रिसरोजध्यानसुधाजलधौतसमस्ताघो गोविन्दं परमानन्दामृतमन्तःस्थं समभ्येति ॥ ९ ॥

इति गोविन्दाष्टकं समाप्तम् ॥

---

# अथ जयनारायणस्तोत्रम् ।



जय नारायण जय पुरुषोत्तम जय वामन कंसारे उद्धर मामसुरेशविनाशिन् पतितोऽहं संसारे । घोरं हर मम नरकरिपो केशव कल्मषभारं मामनुकम्पय दीनमनाथं कुरु भवसागरपारम् ॥ १ ॥ जय जय देव जयासुरसूदन जय केशव जय विष्णो जय लक्ष्मीमुखकमलमधुव्रत जय दशकन्धरजिष्णो । घोरं हर० ॥ २ ॥ त्वं जननी जनकः प्रभुरच्युत त्वं पुत्रसुहृद्धनमित्रं त्वं शरणं शरणागतवत्सल त्वं भवजलधिवहित्रम् । घोरं० ॥ ३ ॥ पुनरपि जननं पुनरपि मरणं पुनरपि गर्भनिवा-

सं सोढुमलं पुनरस्मिन्माधव मामुद्धर निजदासम् । घोरं० ॥ ४ ॥ जनकसुतापतिचरणपरायणशङ्करमुनिवरगीतं धारय मनसि कृष्ण पुरुषोत्तम वारय संसृतिभीतिम् । घोरं ॥ ५ ॥ यद्यपि सकलमहं कलयामि हरे नहि किमपि ससत्त्वं तदपि न मुञ्चति मामिदमच्युत पुत्रकलत्रममत्वम् । घोरं हर० ॥ ६ ॥

इति जयनारायणस्तोत्रम् ॥

---

# अथ भजगोविन्दस्तोत्रम् ।



दिनमपि रजनी सायं प्रातः शिशिरवसन्तौ पुनरायातः । कालः क्रीडति गच्छत्यायुस्तदपि न मुञ्चत्याशावायुः । भज गोविन्दं भज गोविन्दं भज गोविन्दं मूढमते । प्राप्ते सन्निहिते मरणे त्वा नहि नहि रक्षति डुकृञ्करणे ॥ १ ॥ अग्रे वह्निः पृष्ठे भानू रात्रौ चिबुकसमर्पितजानुः।करतलभिक्षस्तरुतलवासस्तदपि न मुञ्चत्याशापाशम् । भज गोविन्दं० ॥ २ ॥ यावद्वित्तोपार्जनसक्तस्तावन्निजपरिवारो रक्तः । पश्चाद्धावति जर्जरदेहे वार्तां पृच्छति कोऽपि न गेहे । भज० ॥ ३ ॥ जटिलो मुण्डी लुञ्चितकेशः काषायाम्बरकृतबहुवेषः । पश्यन्नपि च न पश्यति मूढ उदरनिमित्तं कृत-

बहुवेषः । भज० ॥ ४ ॥ भगवद्गीता किञ्चिदधीता गङ्गाजललवकणिका पीता । येनाकारि मुरारिसमर्चा तस्य यमः किं कुरुते चर्चाम् । भज० ॥५॥ अङ्गं गलितं पलितं मुण्डं दशनविहीनं जातं तुण्डम् । वृद्धो याति गृहीत्वा दण्डं तदपि न मुञ्चत्याशां देहे । भज० ॥ ६ ॥ बालावस्था क्रीडनशीला तरुणावस्था तरुणीरसिका। वृद्धावस्था चिन्तामुदिता स्वात्मन्यवस्था कापि न योग्या । भज० ॥ ७ ॥ पुनरपि जननं पुनरपि मरणं पुनरपि जननीजठरे शयनम् । इह संसारे बहुदुस्तारे कृपयापारे पाहि मुरारे । भज० ॥ ८ ॥ पुनरपि रजनी पुनरपि दिवसः पुनरपि पक्षः पुनरपि मासः । पुनरप्ययनं पुनरपि वर्षं तदपि न मुञ्चत्याशा मर्त्यम् । भज० ॥ ९ ॥ वयसि गते कः कामविकारः शुष्के नीरे कः कासारः । क्षीणे वित्ते कः परिवारो ज्ञाते तत्त्वे कः संसारः । भज० ॥ १० ॥ नारीस्तनभरजघननिवेशं दृष्ट्वा मायामोहावेशम् । एतन्मांसवसादिविकारं मनसि विचारय वारंवारम् । भज गोविन्दं० ॥ ११ ॥ कस्त्वं कोऽहं कुत आयातः का मे जननी को मे तातः । इति परिभावय सर्वमसारं विश्वं त्यक्त्वा स्वप्नविचारम् । भज० ॥ १२॥ गेयं गीतानामसहस्रं ध्येयं श्रीपतिरूपमजस्रम् । नेयं सज्जनसङ्गे चित्तं देयं दीनजनाय च वित्तम् । भज० ॥ १३ ॥ यावज्जीवो निवसति देहे कुशलं तावत्पृच्छति गेहे । गतवति वायौ देहापाये भार्या बिभ्यति तस्मिन्काये ।

भज० ॥ १४ ॥ सुखतः क्रियते रामाभोगः पश्चाद्धन्त शरीरे रोगः। यद्यपि लोके मरणं शरणं तदपि न मुञ्चति पापाचरणम्। भज० ॥१५॥ रथ्याकर्पटविरचितकन्थाः पुण्यापुण्यविवर्जितपंथाः। नाहं नत्त्वं नायंलोकस्तदपि किमर्थं क्रियते शोकः। भज० ॥ १६ ॥ कुरुते गङ्गासागरगमनं व्रतपरिपालनमथवा दानम्। ज्ञानविहीने सर्वमनेन मुक्तिर्न भवति जन्मशतेन। भज० ॥ १७ ॥

इति भजगोविन्दस्तोत्रम्।

---

# अथ रासस्तुतिः।



अङ्गनामङ्गनामन्तरे माधवो माधवं माधवमन्तरेणाङ्गना। इत्थमाकल्पिते मण्डले मध्यगः सञ्जगौ वेणुना देवकीनन्दनः ॥१॥ बालिकाबालिकाताललीलालयासङ्गसन्दर्शितभ्रूलताविभ्रमः। गोपिकागीतदत्तावधानः स्वयं सञ्जगौ० ॥ २ ॥ कापि वीणाभिरामस्वरं गायती कापि वीणारणत्कङ्कणं नृत्यती। कापि शृङ्गारहारावलीरञ्जिता सञ्जगौ० ॥ ३ ॥ केकिकेकाकृतातङ्कपङ्केरुहालीनहंसावलीह्रादनिर्ह्रादिते। शीतशीतावटे यामुनीये तटे सञ्जगौ० ॥ ४ ॥ मौलिमन्दारमालालसद्भृङ्गिकागीतभीतप्रियाविभ्रमालिङ्गितः। त्रस्तगोपीकु-

चाभोगसंमर्दिनः सञ्जगौ वेणुना देवकीनन्दनः ॥ ५ ॥
चारुचन्द्राननालोचनाचुम्बितो गोपगोवृन्दगोपालि-
कावल्लभः। कंसवंशाटवीदाहदावानलः सञ्जगौ०॥ ६ ॥
चारुचामीकराभासितांसो विभुर्वैजयन्तीं दधद्भासितो-
रस्थले। नन्दवृन्दावने वल्लवीमध्यगः सञ्जगौ० ॥ ७ ॥
पारिजातं समुद्धृत्य राधाधवो रोपयामास भामाभया-
दङ्गने । वल्लवीवृन्दवृन्दारिकाकामुकः संजगौ० ॥ ८ ॥
गोपिकागोऽपि कामानलाऽक्षोभितो मानसे मानसे-
कार्द्रिते मामके । न्यस्तपादांबुजेनाऽक्षयानन्दकृत्सं-
जगौ० ॥ ९ ॥ मोहमानादिभूचित्तशृङ्गोदिते दृश्य-
रंगांगने स्वीकृतानेकभाः । शोकरोगादिभावेऽज्ञसौ-
ख्येऽध्रुवे संजगौ० ॥१०॥ नन्दवृन्दावने बालवृन्दावृतो
गोपिवृन्दारिकादत्ततालो हरिः। भक्तशोकार्तिहृद्दुष्ट-
शोकार्तिकृत्संजगौ० ॥ ११ ॥ केशवः केशिहा
श्रीधरः श्रीप्रदो नन्दजो नन्दनो नाममात्राजुषाम् ।
तामसे मामके मानसे न्यस्तपात्संजगौ० ॥१२॥ श्रीगु-
रोरङ्घ्रिमूलेन लीनाऽऽमले वन्यमाली रमालालिता-
ङ्घ्रिचम्बुजः। सोद्धवः केशवो मानसे नाट्यकृत्सञ्जगौ०
॥ १३ ॥ क्षीरसारादि हत्वा प्रसूभीतितः सुप्रलीनाहमा-
द्याऽऽविताना‌ऽऽवृते । मामसे मे विभुर्निर्भयं नर्मदः
सञ्जगौ० ॥ १४ ॥ चैलसंघानि हत्वा तरुस्कन्धगो
गोपपोतैः कृतोऽधःस्थले हास्यकः । गोपवामांगनार-
ब्धलीलास्तवः सञ्जगौ० ॥ १५ ॥ मोहरोगौषधं सर्वदा-

ऽन्वेष्य यं केशवं योगिनो भक्तहृद्वासिनम् । यान्ति मृत्योस्सदा भीत्यभावं हरिः सञ्जगौ वेणुना देवकी-नन्दनः ॥ १६ ॥

इति रासस्तुतिः ॥

---

# अथ विचारद्वादशपञ्जरस्तोत्रम् ।



मूढ जहीहि धनागमतृष्णां कुरु सद्बुद्धिं मनसि वितृष्णाम् । यल्लभसे निजकर्मोपात्तं वित्तं तेन विनोदय चित्तम् ॥ १ ॥ अर्थमनर्थं भावय नित्यं नास्ति ततः सुखलेशः सत्यम् । पुत्रादपि धनभाजां भीतिः सर्वत्रैषा विहिता नीतिः ॥ २ ॥ का ते कान्तः कस्ते पुत्रः संसारोऽयमतीव विचित्रः । कस्य त्वं कः कुत आयातस्तत्त्वं चिन्तय यदिदं भ्रान्तः ॥ ३ ॥ मा कुरु धनजनयौवनगर्वं हरति निमेषात्कालः सर्वम् । मायामयमिदमखिलं हित्वा स्वात्मपदं त्वं प्रविश विदित्वा ॥४॥ कामं क्रोधं लोभं मोहं त्यक्त्वात्मानं भावय कोऽहम् । स्वात्मज्ञानविहीना मूढास्ते पच्यन्ते नरकनिगूढाः ॥ ५ ॥ सुरमन्दिरतरुमूलनिवासः शय्याभूतलमजिनं वासः । सर्वपरिग्रहभोगत्यागः कस्य सुखं न करोति विरागः ॥ ६ ॥ शत्रौ मित्रे पुत्रे बन्धौ मा कुरु

यत्नं विग्रहसन्धौ । भव समचित्तः सर्वत्र त्वं वांछस्य-
चिराद्यदि विष्णुत्वम् ॥ ७ ॥ त्वयि मयि चान्यत्रैको
विष्णुर्व्यर्थं कुप्यसि सर्वसहिष्णुः । सर्वस्मिन्नपि
पश्यात्मानं सर्वत्रोत्सृज भेदज्ञानम् ॥ ८ ॥ प्राणायामं
प्रत्याहारं नित्यानित्यविवेकविचारम् । जप्यसमेत-
समाधिविधानं कुर्ववधानं महदवधानम् ॥ ९ ॥ नालि-
नीदलगतसलिलं तरलं तद्वज्जीवितमतिशयचपलम् ।
विद्धि व्याध्यभिमानग्रस्तं लोकं शोकहतं च समस्तम्
॥ १० ॥ का तेऽष्टादशदेशे चिन्ता वातुल तव किं
नास्ति नियन्ता । यस्त्वां हस्ते सुदृढनिबद्धं बोधयति
प्रभवादिविरुद्धम् ॥ ११ ॥ गुरुचरणाम्बुजनिर्भरभक्तः
संसारादचिराद्भव मुक्तः । सेन्द्रियमानसनियमादेवं
द्रक्ष्यसि निजहृदयस्थं देवम् ॥ १२ ॥ द्वादशपञ्जरि-
कामय एषः शिष्याणां कथितो ह्युपदेशः । येषां चित्ते
नास्ति विवेकस्ते वीक्षन्ते नरकमनेकम् ॥ १३ ॥

इति विचारद्वादशपञ्जरस्तोत्रम् ॥

---

# अथ कृष्णजन्मस्तुतिः ।

रूपं यत्तत्प्राहुरव्यक्तमाद्यं ब्रह्मज्योतिर्निर्गुणं निर्विकारम्।
सत्तामात्रं निर्विशेषं निरीहं स त्वं साक्षाद्विष्णुरध्यात्म-

दीपः ॥ १ ॥ नष्टे लोके द्विपरार्धावसाने महाभूतेष्वादिभूतं गतेषु । व्यक्तेऽव्यक्तं कालवेगेन याते भवानेकः शिष्यते शेषसंज्ञः ॥ २ ॥ योऽयं कालस्तस्य तेऽव्यक्तबन्धोश्चेष्टामाहुश्चेष्टते येन विश्वम् । निमेषादिर्वत्सरान्तो महीयांस्तं त्वीशानं क्षेमधाम प्रपद्ये ॥ ३ ॥ मर्त्यो मृत्युव्यालभीतः पलायन्सर्वांल्लोकान्निर्वृतिं नाध्यगच्छत । त्वत्पादाब्जं प्राप्य यदृच्छयाद्य स्वस्थः शेते मृत्युरस्मादपैति ॥ ४ ॥

इति दशमस्कन्धे देवकीकृता स्तुतिः ॥

---

# अथ नारायणार्त्तत्राणस्तोत्रम् ।



प्रह्लाद प्रभुरस्ति चेत्तव हरिः सर्वत्र मे दर्शय स्तम्भे चैनमिति ब्रुवाणमसुरे तत्राविरासीद्धरिः । वक्षस्तस्य व्यदारयन्निजनखैर्वात्सल्यमावेदयन्नार्तत्राणपरायणः स भगवान्नारायणो मे गतिः ॥१॥ येनारक्षि रघूत्तमेन जलधेस्तीरे दशास्यानुजस्त्वायातः शरणं रघूत्तम विभो रक्षातुरं मामिति । पौलस्त्येन निराकृतोऽस्मि सदसि भ्रात्रा स्वलङ्कापुरादार्तत्राणपरायणः ० ॥२॥ नक्रग्रस्तपदं समुद्धृतकरं ब्रह्मेष्टदेवेश मां पाहीति प्रवदन्तमेव करिणं देवज्य शक्रेज्य भोः । मा शोचेति ररक्ष नक्र-

वदनाच्चक्रश्रिया तत्क्षणादार्त्तत्राणपरा० ॥ ३ ॥ हा कृष्णाच्युत हा कृपाजलनिधे हा पाण्डवानां गते क्वासि क्वासि सुयोधनादवमतां हा रक्ष मां द्रौपदीम् । इत्युक्तोऽक्षयवस्त्ररक्षिततनुं योऽरक्षदापद्गणादार्तत्राण० ॥ ४ ॥ यत्पादाब्जनखोदकं त्रिजगतां पापौघविध्वंसनं यन्नामामृतपूरणं प्रपिबतां सन्तापसंहारकम् । पाषाणाञ्च यदंघ्रिणा निजवधूं भूयो मुनिश्चाप्तवानार्त्तत्राण० ॥ ५ ॥ यन्नामस्मृतिमात्रतोऽपरिमितं संसारवारांनिधिं तीर्त्वा गच्छति दुर्जनोऽपि परमं विष्णोः पदं शाश्वतम् । तस्यैव स्थितिकारिणस्त्रिजगतां नाथस्य दासोऽस्म्यहमार्त-त्राण० ॥ ६ ॥ नाथेति श्रुतयो न तत्त्वमतयो घोषे स्थिता गोपिकाः स्वैरिण्यः कुलजातिधर्मरहिता अप्यात्मभावं ययुः । भक्तिर्यस्य ददाति मुक्तिमतुलां याम्येऽपि यः सूरित आर्तत्राण० ॥ ७ ॥ क्षुत्तृष्णार्त्तसहस्रशिष्यसहितं दुर्वाससं प्रेक्ष्य तं द्रौपद्याऽद्वयभक्तियुक्तमनसा शाकं स्वहस्तार्पितम् । भुक्त्वातर्पयदात्मसृष्टिमखिलामावेदयन्यः कृपामार्त्तत्राण० ॥ ८ ॥ येनावाहि महार्णवे वसुमती संवर्तकाले महालीलाक्रोडवपुर्धरेण हरिणा नारायणेन स्वयम् । यः पापिद्रुमछेदनं हि सहसा कृत्वा च प्रागाद्दिवमार्त्तत्राण० ॥ ९ ॥ उत्तानांघ्रिशिशुर्ध्रुवो हि सहसा मातुः सपत्न्या रुषा तस्याङ्कादवतारितश्च भगवद्ध्यानैकनिष्ठस्ततः । प्राप्तं तेन

श्रियः पदं परमया भक्त्याथ यस्याभयमार्त्तत्राण० ॥ १० ॥ यः सान्दीपनदैशिकस्य तनयं लोकान्तरे सङ्गतं चानीय क्रमशो हि पुत्रमरणादुज्जृम्भमाणाखिदः। सन्तोषं जनयन्नमेयमहिमा पुत्रार्थसम्पादनादार्त्तत्राण० ॥ ११ ॥ योऽरक्षद्वसनादिद्रव्यरहितं विप्रं सुदामाभिधं दीनाद्दीनसुरंकपालनपरः श्रीशंखचक्रोज्ज्वलः। उज्जीर्णाम्बरमुष्टिमात्रपृथुकानादाय भक्त्या क्षणादार्त्तत्राण० ॥ १२ ॥ देवे वर्षति यज्ञविप्लवरुषा वज्राश्मवर्षानिलैः सीदत्पालपशुस्त्रि आत्मशरणं दृष्ट्वानुकम्पी गिरिम्। बिभ्रद्धचैककरेण शक्रमदभिद्गोष्ठं त्वपात्सत्कृपादार्तत्राण० ॥ १३ ॥ वात्सल्यादभयप्रदानसमयादार्तार्तिनिर्वापणादौदार्यादघशोषणादगणितश्रेयःपदप्रापणात्। सेव्यः श्रीपतिरेव सर्वजगतामेकान्ततः साक्षिणः प्रह्लादश्च विभिषणश्च करिराट् पाञ्चल्यहल्या ध्रुवः ॥ १४ ॥

इति नारायणार्तत्राणस्तोत्रम् ॥

---

# अथ नारायणोपनिषत्



अथ पुरुषो ह वै नारायणोऽकामयत प्रजाः सृजेयेति नारायणात्प्राणो जायते मनः सर्वेन्द्रियाणि च खं वायु-

ज्योतिरापश्च पृथिवी विश्वस्य धारिणी, नारायणाद्ब्रह्मा जायते नारायणात्प्रजापतिः प्रजायते नारायणादिन्द्रो जायते नारायणादष्टौ वसवो नारायणादेकादश रुद्राः नारायणाद्द्वादशादित्याः सर्वा देवता सर्वे ऋषयः सर्वाणि छन्दांसि सर्वाणि च भूतानि नारायणादेव समुत्पद्यन्ते नारायणे प्रलीयन्ते।

अथ नित्यो देव एको नारायणो ब्रह्मा च नारायणः शिवश्च नारायणः शक्रश्च नारायणः वसवोऽश्विनौ च नारायणो द्वादशादित्याश्च नारायणः सर्वे ऋषयश्च नारायणः कालश्च नारायणो दिशश्च नारायणोऽधश्च नारायण ऊर्ध्वं च नारायणो मूर्तामूर्तं च नारायणोऽन्तर्बहिश्च नारायणो नारायण एवेदं सर्वं यद्भूतं यच्च भव्यम्॥

अथ नित्यो निष्कलो निराख्यातो निर्विकल्पो निरंजनः। शुद्धो देव एको नारायणो न द्वितीयोऽस्ति कश्चित्। य एवं वेद विष्णुरेव भवति॥ रुद्रं सुसारथिं कृत्वा मनः प्रग्रहवान्पुमान्। प्रयाति परमं पारं विष्णवाख्यं पदमव्ययम्॥ एतद्वै नारायणस्योपनिषद् यो ह वै नारायणस्योपनिषदमधीते स सर्वेभ्यः पापेभ्यो विमुक्तो भवति स सर्वेभ्यो घोरेभ्यो विमुक्तो भवति स सर्वान्कामानाप्नोति सर्वांश्च लोकानाप्नोति ब्रह्मत्वं च गत्वाऽमृतत्वं च गच्छति "ॐ" इत्येकाक्षरं "नमः" इति द्वे अक्षरे "नारायणाय" इति पंचाक्षराणि एतद्वै नारायणस्याष्टाक्षरं पदं यो ह वै

नारायणस्याष्टाक्षरं पदमधीते सोऽनुपद्रवः सर्वमायुरेति विन्दते प्राजापत्यं रायस्पोषं गोपत्यं ततोऽमृतत्वमश्नुते ततोऽमृतत्वमश्नुते इति। प्रत्यगानन्दं ब्रह्म पुरुषं प्रणवस्वरूपमकार उकार मकार इति तान्येकधा समभवंस्तदेतदोमिति। "यमुक्त्वा मुच्यते योगी जन्मसंसारबन्धनात्"। ॐनमोनारायणायेति मन्त्रोपासको वैकुण्ठभुवनंगमिष्यति तदिदं परं पुरुषं पुंडरीकाक्षं विज्ञानघनं तस्मात्तडिदाभासमात्रम्। "ब्रह्मण्यो देवकीपुत्रो ब्रह्मण्यो मधुसूदन" इति सर्वभूतस्थमेकं वै नारायणं कारणं पुरुषोत्तममकारणं परं ब्रह्मोमिति ॥ एतदथर्वणशिरो योऽधीते सपापोऽपापो भवति सायमधीयानो दिवसकृतं पापं नाशयति, प्रातरधीयानो रात्रिकृतं पापं नाशयति, मध्यन्दिनमादित्याभिमुखोऽधीयानः पंचभ्यः पातकातिपातकमहापातकोपपातकाल्पपातकेभ्यः प्रमुच्यते, सर्ववेदपारायणं पुण्यं लभते, श्रीनारायणचरणसायुज्यमाप्नोति ॥

इत्यथर्ववेदे नारायणोपनिषत्।

# अथ ब्राह्मी विद्या।

अथोच्यते ब्रह्मविद्या सद्यः प्रत्ययकारिणीम्। शिवः श्रीभूतिराजो यामस्मभ्यं प्रत्यपादयत् १॥ सर्वेषामेव भूतानां मरणे समुपस्थिते। यया पठितयोत्क्रम्य जीवो

याति निरञ्जनम्॥२॥या ज्ञानिनोऽपि सम्पूर्णकृत्यस्यापि
श्रुता सती ।प्राणादिच्छेदजां देहव्यथां सद्यो व्यपो-
हति॥३॥यामाकर्ण्य महामोहविवशोऽपि क्रमागताम् ।
प्रबोधं वक्त्रसाम्मुख्यमभ्येति रभसात्स्वयम् ॥४॥ तारं
मायां निष्कलं च तनुत्रं च नवात्मकः । एषा पंचाक्षरी
ब्रह्मविद्या भवति निष्कला ॥ ५ ॥ प्रतिवाक्यं यथा-
द्यन्तयोजिता सकला भवेत् । सा पंचदशाभिर्वाक्यै-
रस्याः षोडशधान्तरे ॥ ६ ॥ अत्र तारम् "ओं" माया,
"ह्रीं" निष्कला, "ह्रूं"। तनुत्रबीजान्तरे यथा "हैं"इति
कथयन्ति"हुं"च ॥ ॥ ॐ ह्रीं हुं हैं हसरक्षमलवयऊं॥९
परमपदात्त्वमागतः सनातनस्त्वं जहीहि देहान्तरम् ।
पादांगुष्ठादि विभो निबन्धनं बन्धनं जहीत्युग्रम् ॥ ॐ
ह्रीं हुं हसरक्षमलवयऊँ९॥१॥ॐ ह्रीं हुँ हैं ऊँ हसरक्षमल-
वय ऊं९ गुल्फान्तं जानुगतं जत्रुस्थं बन्धनं तथा मेढम् ।
जहीहि पुरमग्र्यं हृत्पद्मात्त्वं समुत्तिष्ठ । ४ँ । ९ँ ॥ २॥ ४ँ । ९ँ ।
हंस हयग्रीव विभो सनातनस्त्वं परोऽसि जीवाख्यः ।
रविसोमवह्निसंघट्टं बिन्दुं देव हहह समुत्क्राम । ४ँ । ९ँ
॥३॥ ४ँ।९ँ। हंसमहामन्त्रमयःसनातनस्त्वं शुभाशुभापेक्षी
मंडलमध्यनिविष्टः शक्तिमहासेतुकारणमहार्थः । ४ँ ९ँ
॥ ४ ॥ ४ँ ९ँ काम लोभोभयानिविष्टः प्रबोधमायाहि
हे देव । अज्ञानात्त्वं बद्धः प्रबोधितं उत्तिष्ठ देहादेव ।
४ँ ९ँ ॥५॥ ४ँ ९ँ गजतालुमाह्वयन्तमौदुम्बरघट्टितं

महाद्वारम् । प्राप्य प्रयाहि हंहो हंहो वामदेवपदम् । ४९॥ ६॥४९ ग्रन्थीश्वर परमात्मन् शान्त महाताल्लुरन्ध्र-मासाद्य । उत्क्राम हे देवेश्वर निरञ्जनं शिवपदं प्रया-ह्याशु ४।९॥ ७॥ ४९ आक्रम्य मध्यमार्गं प्राणापानौ समाहृत्य । धर्माधर्मौ त्यक्त्वा नारायण याहि शान्त्य-न्तम् । ४।९॥ ८॥ ४।९। हे ब्रह्मन् हे विष्णो हे रुद्र शिवोऽसि वासुदेवस्त्वम् । अग्नीषोम सनातन त्रिपिण्डकं जहि महाकोशम् ।४।९॥९॥४।९। अंगुष्ठमात्रममलं सावरणं जहिहि महासूक्ष्मम् । गुणा-तीतं निरावरणं स्वस्वरूपं प्रत्यभिज्ञां नय । ४ । ९ ॥१०॥ ४ ।९। पुरुषस्त्वं प्रकृतिमयैर्बद्धोऽहंकारतन्तुना बन्धैः । अभवाभव नित्योदित परमपुरुष त्यज स्वरा-गमध्वानम् । ४ । ९ ॥ ११ ॥ । ४ । ९ । मन्त्रशरीरमवि-लम्बमाशु त्वमेहि देहान्तम् । तदिदं भ्रममात्रसिद्धं देह-पञ्जरे नितान्ततः संघम् । ४ । ९ ॥ १२॥ ४ । ९ । नन्विदं गुणभूतमयं त्यजस्व षाट्कौशिकं पिंडम् । एतेन संघं जानीहि केवलमहंकारमात्रमेव । ४ । ९ ॥ १३ ॥ ४ । ९ । मा देहं भूतमयं प्रगृह्यतां किन्तु शाश्वतं नित्यम् । स्वानुभवमात्रसिद्धं सच्चिदानन्दमात्रं स्वमेव । ४ । ९ ॥ १४ ॥ ४ । ९ । मोहमयं त्रिधास्थितं दृश्यात्मैतज्ज-गद्भित्त्वा । मंडलमनन्तममलं विमृश्यांतर्धियाऽऽगच्छ ।

ॐ ह्रीं हुं हैं ४ हसरक्षमलवयऊं ९ ॥ १५ ॥ आर्यात्म-पद्यबन्धानि वाक्यानि दश पञ्च च । पदानां ब्रह्मवि-द्येयं षष्ठषष्ट्यधिकं शतम् ॥ १ ॥ अथवा सर्वभूतानां मरणान्ते उपस्थिते । इयमुत्क्रामणी विद्या येनात्मा याति संगतिम् ॥ २ ॥

इति श्रीनिःश्वाससंहितायां ब्राह्मी विद्याऽष्टमे पटले ॥

---

# अथ शिवस्तुतिः ।

ॐ गले कलितकालिम प्रकटितेन्दु भालस्थले विनाटितजटोत्करं प्रकटपाणिपाथोरुहे । उदंचितक-पालकं जघनसीम्नि संदर्शितद्विपाजिनमनुक्षणं किमपि धाम वंदामहे ॥ १ ॥ वृषोपरि परिस्फुरद्धवलयधाम धाम श्रियः कुवीरगिरिगौरिमप्रभवगर्वनिर्वासनम् । क्वचि त्पुनरुमाकुचोपचितकुंकुमैरंचितं गजाजिनविराजितं वृजिनभंगबीजं भजे ॥ २ ॥ उद्यत्तरविलोचनत्रय-विसृत्वरज्योतिषा कलाकरकलाकरव्यतिकरेण चाह-र्निशम् । विकासितजटाटवीविहरणोत्सवप्रोच्छलत्तरा-मरतरंगिणीतरलचूडमीडे मृडम् ॥ ३ ॥ विभूषणसुराप-गाशुचितरालवालावलीवहद्बहुलशीकरप्रकरसेकसंव-र्धिता । महेश्वरसुरद्रुमस्फुरितसज्जटामञ्जरी नमज्जनफल-

प्रदा तदिह किं न भूयामहम्॥४॥विहाय कमलालया-
विलसितानि विद्युन्नटीविडम्बनपटूनि मे विहरणं
विधत्तां मनः। कपर्दिनि कुमुद्वतीरमणखंडचूडामणौ
कटीतटपटीभवत्करटिचर्मणि ब्रह्मणि ॥ ५ ॥ भवद्भव-
नदेहलीलुठितदण्डिदण्डाहतित्रुटन्मुकुटकोटिभिर्मघ-
वदादिभिर्भूयते। भजेम भवदन्तिकं प्रकृतिमेत्य पैशा-
चिकीं किमित्यमरसम्पदां प्रमथनाथ नाथामहे ॥ ६ ॥
बहिर्विषयसंततिप्रतिनिवर्तिताक्षावलीसमाधिकलि-
तात्मनः पशुपतेरशेषात्मनः। शिरःसुरसरित्तटीकुटि-
लकल्पकल्पद्रुमं निशाकरकलामहं वसु विमृश्यमाणं
भजे ॥ ७ ॥ त्वदर्चनपरायणप्रमथकन्यकालुण्ठितप्रसून-
सफलद्रुमं कमपि शैलमाशास्महे। अलं तटवितर्दि-
काशयितसिद्धसीमंतिनीप्रकीर्णसुमनोमनोरमणमेरुणा
मेरुणा ॥ ८ ॥ त्वदीयसुरवाहिनीविमलवारिधाराव-
लज्जगद्गहनगाहिनीपातिरयं समाक्रामतु। उपोत्तम-
सरित्तटे विटपिताटवीप्रोल्लसत्तपस्विपरिषत्तुलामयल-
मल्लिकाभं प्रभो ॥ ९ ॥ न जातु हर यातु मे विषयदु-
र्विलासं मनो मनोभवकथास्तथा न च मनोरथातिथ्य-
भूः। स्फुरत्तरतरंगिणीतटकुटीरकोटौ वसन्नये शिव
दिवानिशं भवभवानिपूजारवः ॥१०॥

इति लङ्केश्वरकृता शिवस्तुतिः ॥

---

# श्रीजटायुकृतरामस्तुतिः ।



ॐ श्रीजटायुरुवाच। अगणितगुणमप्रमेयमाद्यं सकलजगत्स्थितिसंयमादिहेतुम् । उपरमपरमं परात्मभूतं सततमहं प्रणतोऽस्मि रामचंद्रम् ॥ १ ॥ निरवधिसुखमिंदिराकटाक्षक्षपितसुरेंद्रचतुर्मुखादिदुःखम् । नरवरमनिशं नतोऽस्मि रामं वरदमहं वरचापबाणहस्तम् ॥२॥ त्रिभुवनकमनीयरूपमीड्यं रविशतभास्वरमीहितप्रदानम् । शरणदमनिशं सुरागमूले कृतनिलयं रघुनंदनं प्रपद्ये ॥ ३ ॥ भवविपिनदवाग्निनामधेयं भवमुखदैवतदैवतं दयालुम् । दनुजपतिसहस्रकोटिनाशं रवितनयासदृशं हरिं प्रपद्ये ॥४॥ अविरतभवभावनातिदूरं भवविमुखैर्मुनिभिः सदैव दृश्यम् । भवजलधिसुतारणांघ्रिपूतं शरणमहं रघुनन्दनं प्रपद्ये ॥ ५ ॥ गिरिशगिरिसुतामनोविलासं गिरिवरधारणमीडिताभिरामम् । सुरवरदनुजेन्द्रसेविताघ्रिं सुरवरदं रघुनायकं प्रपद्ये ॥ ६ ॥ परधनपरदारवर्जितानां परगुणभूतिषु तुष्टमानसानाम् । परहितनिरतात्मनां सुसेव्यं रघुवरमम्बुजलोचनं प्रपद्ये ॥७॥ स्मितरुचिरविकासिताननाब्जं स्मृतिसुलभं सुरराजरत्ननीलम् । सितजलरुहचारुनेत्रशोभं रघुपतिमीशगुरोर्गुरुं प्रपद्ये ॥ ८ ॥ हरिकमलजशम्भुरूपभेदात्त्वमिह विभासि

गुणत्रयानुवृत्तः । रविरिव जलपूरितोदपात्रेष्वमरप-
तिस्तुतिपात्रमीशमीडे ॥ ९ ॥ रतिपतिशतकोटिसुन्द-
राङ्गं शतपथगोचरभावनाविदूरम् । यतिपतिहृदये
सदा विभातं रघुपतिमार्तिहरं रघुं प्रपद्ये ॥ १० ॥
इत्येवं स्तुवतस्तस्य प्रसन्नोऽभूद्रघूत्तमः । उवाच गच्छ
भद्रं ते मम विष्णोः परं पदम् ॥ ११ ॥ गृह्णाति
यस्त्विदं स्तोत्रं लिखेद्वा नियतं पठेत् । स याति मम
सारूप्यं यथा त्वं मत्परायणः ॥ १२ ॥ इति स राघव-
भाषितं तदा श्रुतवान्हर्षसमाकुलो द्विजः । रघुनंदन-
साम्यमास्थितः प्रययौ ब्रह्मसुपूजितं पदम् ॥ १३ ॥

इति जटायुकृतरामस्तुतिः ॥

---

# अथ त्रिपुरसुन्दरीस्तोत्रम् ।

ॐ श्वेतपद्मासनारूढां शुद्धस्फटिकसन्निभाम् ।
ध्यात्वा वाग्देवतां वन्दे देवीं त्रिपुरसुन्दरीम् ॥ १ ॥
सर्वलोकप्रियकरीं सर्वलोकेषु संस्थिताम् । सर्वैश्व-
र्यप्रदां वन्दे देवीं० ॥ २ ॥ पद्मालयां पद्मपीठां पद्मा-
सेवितपत्कजाम् । पद्मरागनिभां वन्दे देवीं० ॥ ३ ॥
पञ्चबाणधनुर्बाणान्पाशाङ्कुशधरामिमाम् । पञ्चब्रह्म-
मयीं वन्दे देवीं० ॥ ४ ॥ हृत्पुण्डरीकनिलयां षडा-

स्यजननीमिमाम् । षट्कोणेषु स्थितां वन्दे देवीं० ॥ ५ ॥ अष्टैश्वर्यमयाकारामष्टबाहुयुतायुधाम् । अष्टमूर्तिमयीं वन्दे देवीं० ॥ ६ ॥ नवमाणिक्यमुकुटां नवमाणिक्यसेविताम् । नवयौवनगां वन्दे देवीं० ॥ ७ ॥ काञ्चीधाममनोरम्यां काञ्चीधामविभूषिताम् । काञ्चीपुरीश्वरीं वन्दे देवीं० ॥ ८ ॥ हरार्धभागनिलयामम्बामिष्टार्थदायिनीम् । हरप्रियां निजां वन्दे देवीं त्रिपुरसुन्दरीम् ॥ ९ ॥

इति त्रिपुरसुन्दरीस्तोत्रम् ॥

---

# अथ शारिकास्तोत्रम् ।

बीजैः सप्तभिरुज्ज्वलाकृतिरसौ या सप्तसप्तिद्युतिः सप्तर्षिप्रणताङ्घ्रिपङ्कजयुगा या सप्तलोकार्तिहृत् । कश्मीरप्रवरेशमध्यनगरीप्रद्युम्नपीठे स्थिता देवी सप्तकसंयुता भगवती श्रीशारिका पातु नः ॥ जय भगवति विन्ध्यवासिनि श्मशानवासिनि कैलासवासिनि हुङ्कारिणि कालायनि कात्यायनि हिमगिरितनये कुमारमातः गोविन्दभगिनि शितिकण्ठकण्ठाभरणे अष्टादशभुजे भुजगवलयमण्डिते केयूरहाराभरणे जय खड्गत्रि-

शूलडमरुमुद्गरपरशुशशिकलाशरचापवराभयपाशपुस्तककपालखट्वाङ्गगदामुसलतोमरवरहस्ते कृपापरे प्रभूतविविधायुधे चण्डिके चण्डघण्टे किरातवेषे ब्रह्माणि रुद्राणि नारायणि ब्रह्मचारिणि वेदमातः गायत्रि सावित्रि सरस्वति सर्वाधारे सर्वेश्वरि विश्वेश्वरि सर्वकर्त्रि समाधिविश्रान्तिमये चिन्मये चिन्तामणिस्वरूपे कैवल्ये कैवल्यस्वरूपे शिवे निराश्रये निरुपाधिमये ब्रह्मविष्णुमहेश्वरनमिते मोहिनि तोषणि भयङ्करनाशिनि दितिसुतप्रमथिनि काले कालाग्निशिखे कालरात्रे अजे नित्ये सिंहरथे योगरते योगीश्वरनमिते भक्तजनवत्सले सुरप्रिये कारुण्ये दुर्गे दुर्जये शरण्ये कुरु मे जयम् ॥ प्रद्युम्नशिखरासीनां मातृचक्रोपशोभिताम् । पीठेश्वरीं शिलारूपां शारिकां प्रणमाम्यहम् ॥ अमा माऽवतु कामा च चार्वङ्गी टङ्कधारिणी । तारा च पार्वती चैव यक्षिणी शारिकाष्टमी ॥

इति शारिकास्तोत्रम् ॥

---

# अथ ज्वालास्तोत्रम् ।



ॐ नताः स्तुतिपराः सर्वे यस्या नित्यं दिवौकसः ।
तमो हत्वा शङ्करस्य भूत्यै भूयात्सदाशिवा ॥ १ ॥

श्रीसुन्दरीं जगद्धात्रीं ज्वालाव्याप्तदिगन्तराम् । सुरैः सिद्धैः स्तुतां भूपैः सुमुखीं नौम्यहं शिवाम् ॥ २ ॥
दैत्यानां भटकोटिकोटिमुकुटाटोपानधः कुर्वतीं विघ्नानां कटकान्यतीव कटुकान्यापाटयन्तीं स्फुटम् । भक्तानामभयं वरं च दधतीं शान्तात्मनां सर्वदा षड्वर्गेण जितां क्रियाविरहतो ज्वालामुखीं नौम्यहम् ॥ ३ ॥ ब्रह्माणं मधुकैटभौ वधपरौ सन्त्रासयन्तौ परं नानारूपधरावतीव भयदौ स्थूलोन्नतौ संयुगे । तौ हत्वा विनिवर्तितां कृतवतीं तन्मेदसा मेदिनीं सर्वेषां शुभदायिनीं भगवतीं ज्वालामुखीं नौम्यहम् ॥ ४ ॥
सैन्यानां महिषासुरस्य मृतिदां सिंहाधिरूढां च तां नानाकारविशेषसौख्यजननीं देहान्तरे संस्थिताम् । बालामध्यमवृद्धरूपरमणीं श्रीसुन्दरीं वैष्णवीं स्त्रीरूपेण जगद्विमोहनकरीं ज्वालामुखीं नौम्यहम् ॥ ५ ॥
देवानां भयदायकौ सुकठिनौ शुम्भो निशुम्भस्तथा नानाशस्त्रधरौ रिपू धृतिहरौ तौ चण्डमुण्डाङ्कितौ । सङ्ग्रामेऽप्यपराजितौ विकसितौ द्वौ रक्तबीजान्वितौ हत्वैवं सुबलां प्रसन्नवदनां ज्वालामुखीं नौम्यहम् ॥ ॥ ६ ॥ संसारार्णवतारिणीं रविशशिकोटिप्रभां सुप्रभां पापातङ्कनिवारिणीं हरिहरब्रह्मादिभिः संस्तुताम् । दारिद्र्यस्य विनाशिनीं सुकृतिनां जाड्यं हरन्तीं भृशमज्ञानान्धमतेः कवित्वजननीं ज्वालामुखीं नौम्य-

हम् ॥ ७ ॥ रत्नपञ्चकनामानं श्रीसुन्दर्याः स्तवं वरम् । अव्याकुलं यः पठति सोऽभीष्टां सिद्धिमाप्नुयात् ॥८॥ ज्वालामुखी महाज्वाले ज्वालापिङ्गललोचने । ज्वालातेजी महातेजी ज्वालामुखि नमोऽस्तु ते ॥

इति ज्वालामुखीस्तोत्रम् ॥

---

# अथ राज्ञीस्तोत्रम् ।

ॐ शीतांशुबालार्ककृशानुनेत्रां चतुर्भुजामेणत्वगासनस्थाम् । शंखाब्जशूलासिधरां महेशीं राज्ञीं भजेऽहं तुहिनाद्रिरूपाम् ॥ १ ॥ स्मृतैवान्तर्गता पुंसां हरन्ती सकलं मलम् । जयत्येषा महाराज्ञी भक्तानां क्षेमदायिनी ॥ २ ॥ त्रिजगन्मोहिनीमिडे मयूरीभूतसद्गुणे । नमोऽस्तु ते महाराज्ञि पाहि मां शरणागतम् ॥ ३ ॥ शेषाशेषसुखैर्गुण्ये गुणिगुणगणप्रिये । नमोऽस्तु ते० ॥४॥ सुरासुरमुनीन्द्राद्यैर्वन्दनीयपदाम्बुजे । नमोऽस्तु० ॥ ५ ॥ चराचरजगत्सृष्टिस्थितिसंहातिकारिणि । नमोऽस्तु ते० ॥ ६ ॥ भक्तकल्पलतेऽनल्पवाङ्माधुर्याजिताखिले । नमोऽस्तु ते० ॥ ७ ॥ ब्रह्मविष्णुमहेशानवन्दिते गिरिनन्दिनि । नमोऽस्तु ते० ॥ ८ ॥ भक्तानां भीमसंसारपारावारप्रतारिणि । नमोऽस्तु० ॥९॥ निर्गुणे

निष्क्रियै नित्यै सच्चिदानन्दरूपिणि । नमोऽस्तु० ॥ १० ॥ राज्ञीस्तोत्रमिदं पुण्यं त्रिसन्ध्यं प्रयतः पठन्। असंशयं विशेषेण वशयेदखिलं जगत् ॥ ११ ॥

इति राज्ञीस्तोत्रम् ॥

---

# अथ सूर्यस्तुतिः ।

ॐ नम आदित्याय ॥ श्रीभैरवी।भगवन्देवदेवेश भक्तानुग्रहकारक।देहास्वास्थ्यं परं दुःखं भवेदिति न संशयः ॥१॥रोगैर्जीर्णो यदा देहस्तदा कं दैवतं श्रयेत्॥यं स्तुत्वा स्वास्थ्यमाप्नोति तदुपासनमादिश ॥ २ ॥ श्रीभैरवः। शृणु देवि प्रवक्ष्यामि लोकानुग्रहकाम्यया । रोगाजगरग्रस्तानां जन्तूनां पापचेतसाम् ॥ ३ ॥ स्मरणं धारणं चैव सूर्यस्यार्चनमेव च । ज्वरातीसाररोगानां नाशनं स्मरणादपि ॥ ४ ॥ कुष्ठविचर्चिकादद्रूसन्निपातादि नाशनम् । सूक्ष्मातिसूक्ष्मं यत्तेजो तं देवं शरणं श्रये ॥ ५ ॥ वारयेद्विघ्नराशींश्च तमांसि च मुहुर्मुहुः । अन्तर्वातौघध्वंसी यस्तं देवं शरणं श्रये ॥६॥ आकाशरूपो विश्वात्मा देवः प्रकटितः प्रभुः। द्योतनात्रिषु लोकेषु तं देवं शरणं श्रये ॥७॥ ध्यायनात्सर्वलोकेषु चिन्तनादपराजितम्।बुद्ध्यात्सर्वसमायुक्तं

तं देवं शरणं श्रये॥८॥धीप्रेरकं तु यत्तेजः सर्वव्यापक-
मव्ययम्।बुद्धेः पारङ्गतं यत्तच्छरण्यं शरणं श्रये ॥९॥
यत्तदादिशते बुद्धिर्भर्गः सदसदात्मकम्।आर्तो भक्त्या
च परमं शरणं तं व्रजाम्यहम् ॥ १० ॥ रक्तपुष्पसमा-
युक्तं गृहीत्वोद्यन्तमर्चयेत् । प्रतिश्लोकमर्घपुष्पं दत्त्वा
प्राञ्जलिकं स्थितम् ॥११॥ सर्वे रोगाः प्रणश्यन्ति लूता
विस्फोटकादयः ।भगन्दराशिरोरोगमूत्ररोगाश्मरीयुताः
॥१२॥ श्वेतकुष्ठाद्यतीसारपायुकुक्षिसमुद्भवाः । त्वग्रोगा
ये क्षुद्ररोगा ये त्वन्ये च महेश्वरि ॥ १३ ॥ ते सर्वे
सम्प्रणश्यन्ति स्तोत्रस्यास्यानुकीर्तनात् । आपन्न
आपदो मुच्येद्बद्धो मुच्येत बन्धनात् ॥ १४ ॥ अपुत्रः
पुत्रमाप्नोति कन्या विन्दति सत्पतिम् । भीतो
भयात्प्रमुच्येत चेत्याज्ञा पारमेश्वरी ॥१५॥ इदं रहस्यं
परमं नाख्येयं यस्य कस्यचित् । गुह्यं गुह्यतमं लोके
वेदतन्त्रसमुत्थितम्॥१६॥सर्वतः सारमुद्धृत्य तव स्नेहा-
त्प्रकाशितम् । नातः परतरं स्तोत्रं सूर्यस्याराधनं परम्
॥१७॥ अत्र पूज्यो रविर्देवि स्तोत्रेणानेन भक्तितः।सायं
प्रातर्नमस्कृत्य नान्नमद्याज्जलं पिबेत्॥१८॥ वर्षेणैव भवे
त्सिद्धिरिति सत्यं वरानने । बद्धपद्मासनो देवः प्रसन्नो
भक्तवत्सलः॥१९॥सप्ताश्वः सप्तजिह्वश्च द्विभुजः पातु नो
रविः।अक्षतानि च पुष्पाणि सलिलारुणचन्दनैः॥२०॥
अर्घ्यं दत्त्वा प्रयत्नेन सूर्यनामानि कीर्तयेत् । नमस्ते
विश्वरूपाय नमस्ते ब्रह्मरूपिणे ॥ २१ ॥ सहस्ररश्मये

नित्यं नमस्ते सर्वतेजसे । नमस्ते रुद्रवपुषे नमस्ते भक्तवत्सल ॥२२॥पद्मनाभ नमस्तेऽस्तु कुण्डलाङ्गदशोभित ॥ नमस्ते सर्वलोकेश जगत्सर्वं प्रबोधसे ॥ २३ ॥ सुकृतं दुष्कृतं चैव सर्वं पश्यसि सर्वग । सत्यदेव नमस्तेऽस्तु प्रसीद मम भास्कर॥२४॥ दिवाकर नमस्तेऽस्तु प्रभाकर नमोऽस्तु ते । आश्रमस्थस्ततः पूजाप्रतिमां चापि पूजयेत्॥२५॥उदयंस्तु महाभानुस्तेजसा चाभयङ्करः।सहस्ररश्मिदीप्तश्च ह्यादित्यः प्रीयतां मम ॥ २६ ॥

इति सूर्यस्तुतिः ॥

---

# अथ चन्द्रस्तोत्रम् ॥

ॐनमश्चन्द्रमसे ॥ नमश्चन्द्राय सोमायेन्दवे कुमुदबन्धवे । विलोहिताय शुभ्राय शुक्लाम्बरधराय च ॥ १ ॥ त्वमेव सर्वलोकानामाप्यायनकरः सदा । क्षीरोद्भवाय देवाय नमः शङ्करशेखर ॥ २ ॥ युगानां युगकर्ता त्वं निशानाथो निशाकरः । संवत्सराणां मासानामृतूनां तु तथैव च ॥ ३ ॥ ग्रहाणां च त्वमेकोऽसि सौम्यः सोमकरः प्रभुः।ओषधीपतये तुभ्यं रोहिणीपतये नमः॥४॥इदं तु पठते स्तोत्रं प्रातरुत्थाय यो नरः।दिवा वा यदि वा रात्रौ बद्धचित्तो हि यो नरः॥५॥ न भयं विद्यते तस्य कार्यसिद्धिर्भविष्यति । अहो-

रात्रकृतं पापं पठनादेव नश्यति ॥ ६ ॥ द्विजराजो महापुण्यस्तारापतिर्विशेषतः॥ओषधीनां च यो राजा स सोमः प्रीयतां मम ॥ ७ ॥

इति चन्द्रस्तोत्रम् ॥

---

# अथ भौमस्तोत्रम् ॥

ॐ उदयभूधरशिखरकोटरचर दिवाकरसन्निभ कुङ्कुमदहनविद्रुमललितपद्मदलाचलद्युते । ललिततुण्डविचित्रशिखण्डनकुलकुलाधिपवाहन,कुरु महीसुत सिद्ध सुसेवितपादसरोज मयि कृपाम् ॥ १ ॥ मङ्गलो भूमिपुत्रश्च ऋणहर्ता धनप्रदः । स्थिरासनो महाकायः सर्वकर्मावबोधकः ॥ २ ॥ लोहितो लोहिताङ्गश्च सामगायी कृपाकरः॥३॥धर्मराजः कुजो भौमो भूमिजो भूमिनन्दनः।अङ्गारको यमश्चैव सर्वरोगापहारकः॥४॥सृष्टिकर्ताऽपहर्ता च सर्वकामफलप्रदः । भूतिदो ग्रहपूज्यश्च वक्रो रक्तवपुः प्रभुः॥५॥एतानि कुजनामानि यो नित्यं प्रयतः पठेत् । ऋणं न जायते तस्य धनं प्राप्नोत्यसंशयम् ॥ ६ ॥ रक्तपुष्पैश्च गन्धैश्च दीपधूपादिभिस्तथा । मङ्गलं पूजयित्वा तु मङ्गलेऽहनि सर्वदा ॥७॥ ऋणरेखाः प्रकर्तव्या दग्धाङ्गारैस्तदग्रतः । सप्तविंशतिनामानि पठित्वा तु तदन्तिके ॥ ८ ॥ ताश्च प्रमार्जयेत्पश्चा-

द्रामपादेन संस्पृशन् । एवं कृत्वा न सन्देह ऋणहीनो धनी भवेत् ॥ ९ ॥ भूमिजस्य प्रसादेन ग्रहपीडा विनश्यति ॥ येनार्जिता जगत्कीर्तिर्भूमिपुत्रेण शाश्वती ॥ १० ॥ शत्रवश्च हता येन भौमेन महितात्मना । स प्रीयतां तु भौमोऽद्य तुष्टो भूयात्सदा मम ॥ ११ ॥

इति भौमस्तोत्रम् ॥

# अथ बुधस्तोत्रम् ॥

ॐ नमो बुधाय विज्ञाय सोमपुत्राय ते नमः।रोहिणीगर्भसम्भूत कुङ्कुमच्छविभूषित ॥१॥ सोमप्रियसुताऽनेकशास्त्रपारगवित्तम । रौहिणेय नमस्तेऽस्तु निशाकामुकसूनवे ॥ २ ॥ पीतवस्त्रपरीधान स्वर्णतेजोविराजित । सुवर्णमालाभरण स्वर्णदानकरप्रिय ॥३॥ नमोऽप्रातिमरूपाय रूपानां प्रियकारिणे।विष्णुभक्तिमते तुभ्यं चेन्दुराजप्रियङ्कर ॥४॥ सिंहासनस्थो वरदः कर्णिकारसमद्युतिः । खड्गचर्मगदापाणिः सौम्यो वोऽस्तु सुखप्रदः ॥ ५ ॥ स्थिरासनो महाकायः सर्वकर्मावबोधकः। विष्णप्रियो विश्वरूपो महारूपो ग्रहेश्वरः ॥६॥ बुधाय विष्णुभक्ताय महारूपधराय च । सोमात्मजस्वरूपाय पीतवस्त्रप्रियाय च॥७॥अग्रवेदी दीर्घश्मश्रुर्हेमाङ्गः कुङ्कुमच्छविः । सर्वज्ञः सर्वदः सर्वः सर्वपूज्यो ग्रहेश्वरः॥८॥

सत्यवादी खड्गहस्तो ग्रहपीडानिवारकः। सृष्टिकर्ताऽपहर्ता च सर्वकामफलप्रदः ॥ ९ ॥ एतानि बुधनामानि प्रातरुत्थाय यः पठेत्। न भयं विद्यते तस्य कार्यसिद्धिर्भविष्यति ॥ १० ॥ इत्येतत्स्तोत्रमुत्थाय प्रभाते पठते नरः। न तस्य पीडा बाधन्ते बुद्धिभाक्च भवेत्सुधीः ॥ ११ ॥ सर्वपापविनिर्मुक्तो विष्णुलोकं स गच्छति। बुधो बुद्धिप्रदाता च सोमपुत्रो महाद्युतिः। आदित्यस्य रथे तिष्ठन्स बुधः प्रीयतां मम ॥ १२ ॥

इति बुधस्तुतिः ॥

---

# अथ बृहस्पतिस्तोत्रम् ॥

ॐ चराचरगुरुं नौमि गुरुं सर्वोपकारकम्। यस्य संकीर्तनादेव क्षणादिष्टं प्रजायते ॥ १ ॥ बृहस्पतिः सुराचार्यो नीतिज्ञो नीतिकारकः। गुरुर्जीवोऽथ वागीशो वेदवेत्ता विदांवरः ॥ २ ॥ सौम्यमूर्तिः सुधादृष्टिः पीतवासाः पितामहः। अग्रवेदी दीर्घश्मश्रुर्हेमाङ्गः कुङ्कुमच्छविः ॥३॥ सर्वज्ञः सर्वदः सर्वः सर्वपूज्यो ग्रहेश्वरः। सत्यधामाऽक्षमाली च ग्रहपीडानिवारकः ॥४॥ पञ्चविंशतिनामानि गुरुं स्मृत्वा तु यः पठेत। आयुरारोग्यसंपन्नो धनधान्यसमन्वितः ॥ ५ ॥ जीवेद्वर्षशतं साग्रं सर्व-

व्याधिविवर्जितः। कर्मणा मनसा वाचा यत्पापं समुपार्जितम्॥६॥ तद्देतत्पठनादेव दह्यतेऽग्निरिवेन्धनम्। गुरोर्दिनेऽर्चयेद्यस्तु पीतवस्त्रानुलेपनैः ॥ ७ ॥ धूपदीपोपहारैश्च विप्रभोजनपूर्वकम् । पीडाशान्तिर्भवेत्तस्य स्वयमाह बृहस्पतिः ॥ ८ ॥ मेरुमूर्ध्नि समाक्रान्तो देवराजपुरोहितः। ज्ञाता यः सर्वशास्त्राणां स गुरुः प्रीयतां मम॥९॥

इति बृहस्पतिस्तोत्रम् ।

---

# अथ शुक्रस्तोत्रम् ॥

ॐकवीश्वर नमस्तुभ्यं हव्यकव्यविदां वर । उपासक सरस्वत्या मृतसञ्जीवनप्रिय ॥१॥ दैत्यपूज्य नमस्तुभ्यं दैत्येन्द्रशासनाकर । नीतिशास्त्रकलाभिज्ञ बलिजीवप्रभावन ॥ २ ॥ प्रह्लादपरमाह्लाद विरोचनगुरो सित । आस्फूर्जिज्जितशिष्यारे नमस्ते भृगुनन्दन ॥३॥ सुराशन सुराराातिचित्तसंस्थितिभावन । उशना सकलप्राणिप्राणाश्रय नमोऽस्तु ते ॥ ४ ॥ नमस्ते खेचराधीश शुक्र शुक्लयशस्कर । वारुण वारुणीनाथ मुक्तामणिसमप्रभ ॥ ५ ॥ क्षीबचित्त कचोद्धृतिहेतो जीवरिपो नमः । देवयानीययातीष्ट दुहितृस्तेयवत्सल ॥ ६ ॥ वह्निकोणपते तुभ्यं नमस्ते खगनायक । त्रिलोचन-

तृतीयाक्षिसंस्थित शुक्रवाहन ॥ ७ ॥ इत्थं दैत्यगुरोः स्तोत्रं यः स्मरेन्मानवः सदा ॥ दशादौ गोचरे तस्य भवेद्विघ्नहरः सितः ॥ ८ ॥ सोमतुल्या प्रभा यस्य चासुराणां गुरुस्तथा । जेता यः सर्वशत्रूणां स काव्यः प्रीयतां मम ॥ ९ ॥

इति शुक्रस्तुतिः ।

---

# अथ शनैश्चरस्तुतिः ॥

ॐनमस्ते धर्मराजाय त्रिलोकस्य पितामह । सर्वलोककृतार्थाय सद्वृत्ताय च ते नमः ॥ १ ॥ मार्तण्डतेजोजाताय धर्माधर्मविचारक । नमस्ते बुद्धिदात्रे च नमस्ते निर्जराय च ॥ २ ॥ स्वयम्भूसमरूपाय नमस्तेऽस्तु प्रजापते । धर्माधिकारिणे चैव नमस्ते बहुरूपिणे ॥ ३ ॥ नमो धर्ममहिम्ने च पापसंशोधनाय च । ज्ञानाज्ञानस्वरूपाय धर्मरूप नमोऽस्तु ते ॥४॥ नास्तिकेतुकृतं स्तोत्रं प्रत्यक्षं पापनाशनम् । य इमं पठते सम्यग्धर्मराजस्य कीर्तनम् ॥ ५ ॥ न तस्य भवति व्याधिः काप्ययोग्या भयप्रदा । यमं न पश्यते घोरं नरकं च न पश्यति ॥ ६ ॥ श्रुत्वा स्तोत्रं शनेश्चापि धर्मराजोवचोऽब्रवीत् ॥ ७ ॥ इति ॥ वसिष्ठ उवाच ।

रघुवंशेऽतिविख्यातो राजा दशरथः पुरा । चक्रवर्तीति
विज्ञेयः सप्तद्वीपाधिपो बली ॥ १ ॥ कृत्तिकान्ते शनिं
ज्ञात्वा दैवतैर्ज्ञापितो हि सः । रोहिणीं भेदयित्वा तु
शनिर्यास्यति सांप्रतम् ॥ २ ॥ तेन तच्छकटं भेदं
सुरासुरभयङ्करम् । द्वादशाब्दं तु दुर्भिक्षं भविष्यति
सुदारुणम् ॥ ३ ॥ एतच्छ्रुत्वा ततो वाक्यं मन्त्रिभिः
सह पार्थिवः । व्याकुलं तु जगत्सर्वं लोकं जनपदा-
त्मकम् ॥ ४ ॥ दृष्ट्वा तान्सर्वतो लोकाञ्जगत्सर्वं क्षयं
गतम् । देशान्सनगरग्रामान्भयाक्रान्तान्समन्ततः ॥५॥
मुनीन्वसिष्ठप्रमुखान्पप्रच्छ प्रयतो नृपः । सम्प्रदायः
किमत्रास्ति ब्रूत मां मुनिसत्तमाः ॥ ६ ॥ ऋषय ऊचुः ॥
पतिः प्रजानामृक्षोऽयं तस्मिन्भिन्ने कुतः प्रजाः । अयं
योगो हि क्रूरस्तु ब्रह्मशक्रादिभिः सुरैः ॥ ७ ॥ तदा
सञ्चिन्त्यमानस्तु साहसं परमं महत् । समाधाय धनु-
र्दिव्यं दिव्यायुधसमन्वितम् ॥ ८ ॥ रथमारुह्य वेगेन
गतो नक्षत्रमण्डलम् । हंसवर्णैर्हयैर्युक्तो महाकेतुसमन्वि-
तः ॥९॥ दीप्यमानो महातेजाः किरीटमुकुटोज्ज्वलः ।
विभ्राजमानस्त्वाकाशे द्वितीय इव भास्करः ॥ १० ॥
सपादं योजनानां तु लक्षं सूर्यात्परं गतः । रोहिणीं पृष्ठतः
कृत्वा गतो नक्षत्रमण्डलम् ॥११॥ आकर्णचापमाकृष्य
संहारास्त्रं नियोजितम् । कृत्तिकान्ते शनिर्ह्येष प्रविशे-
त्किल रोहिणीम् ॥ १२ ॥ तन्महास्त्रं शनिर्दृष्ट्वा

सुरासुरनिषूदनम्। नृपं दशरथं चाग्रे क्रुद्धं तु भ्रुकुटी
मुखम्॥१३॥ प्रणम्य तद्भयात्सौरिरिदं वचनमब्रवीत्॥
पौरुषं तव राजेन्द्र परं शत्रुभयंकरम्॥ १४॥ देवासुर-
मनुष्याश्च सिद्धगन्धर्वकिन्नराः। मयावलोकिता ह्येते
क्षयं यास्यन्ति तत्क्षणात्॥ १५॥ तुष्टोऽहं तव राजेन्द्र
तपसा पौरुषेण च। दास्यामि ते वरं ब्रूहि
मनसो यदभीप्सितम्॥ १६॥ दशरथ उवाच॥
रोहिणीभेदनं जातु न कर्तव्यं त्वया शने। सरितः
सागरा यावद्यावच्चन्द्रार्कतारकाः॥ १७॥ याचितं तु
मया सौरे नान्यदिच्छामि ते वरम्। एवमस्तु शनिः
प्रोक्त्वा वरं दत्त्वा च शाश्वतम्॥१८॥ पुनरेवाब्रवीत्तुष्टो
वरं वरय सुव्रत॥॥ वसिष्ठ उवाच॥॥ प्राप्यैवं तु वरं
राजा कृतकृत्योऽभवत्तदा॥१९॥ प्रार्थयामास तुष्टात्मा
वरमन्यं शनेस्तदा। न भेत्तव्यं तु शकटं त्वया भास्कर-
नन्दन॥२०॥ द्वादशाब्दे तु दुर्भिक्षं न कर्तव्यं कदाचन।
कीर्तिरेषा मदीया तु भविष्यति जगत्त्रये ॥२१॥ इति
श्रुत्वा शनिः प्राह भूयश्चैव नृपोत्तमम्। एष चाप्यस्तु ते
राजन्वरस्त्वन्यो नृपोत्तम॥ २२॥ एतद्वरं तु संप्राप्य
हृष्टरोमा स पार्थिवः। रथोपान्ते धनुःस्थाप्य भूत्वा
चैव कृताञ्जलिः॥ २३॥ ध्यायन्सरस्वतीं देवं गण-
नाथं विनायकम्। राजा दशरथः स्तोत्रं सौरस्येदमथा-
करोत्॥ २४॥दशरथ उवाच॥ सौरः शनैश्चरो मन्दो

यमः खञ्जो महीसुतः। छायासुतश्च रविजः पतङ्गश्चा-
न्तकोऽनलः ॥ २५ ॥ मुरारेर्ज्वरहन्ता च रक्ताक्षो
दण्डभृत्तथा ॥ कृतान्तः सस्यघाती च यक्षः कालो-
ऽनलप्रियः ॥ २६ ॥ नामानि त्रिंशतीर्यस्य त्रिसन्ध्यं
पठते नरः॥सौरीयं तु भयं तस्य स्वप्नेऽपि न भविष्यति
॥२७॥गर्गश्च कौशिकश्चैव पिप्पलादो महामुनिः। शनै-
श्चरकृतान्दोषान्नाशयन्ति त्रयः स्मृताः ॥२८॥ कोण-
स्थः पिङ्गलो बभ्रुः कृष्णो रौद्रोऽन्तको यमः।सौरः शनै-
श्चरो मन्दः पिप्पलाख्येन संस्तुतः ॥२९॥ एतानि दश
नामानि प्रातरुत्थाय यः पठेत्। मुच्यते महतो घोरा-
च्छनैश्चरकृताद्भयात्॥ ३० ॥ दशरथ उवाच ॥ नमः
कृष्णाय नीलाय शितिकण्ठनिभाय च। नमो नीलम-
यूखाय नीलोत्पलधराय च ॥ ३१ ॥ नमो निर्मांस-
देहाय दीर्घश्मश्रुजटाय च। नमो विशालनेत्राय शुष्को-
दरमुखाय च ॥ ३२ ॥ नमः पुरुषगात्राय स्थूललोम्ने
नमो नमः। नमो नित्यं क्षुधार्ताय सदातृप्ताय वै नमः
॥ ३३ ॥ नमो कालाग्निरूपाय कृतान्ताय नमो नमः।
नमो दीर्घाय शुष्काय कालदंष्ट्र नमोऽस्तु ते॥ ३४ ॥
नमस्ते कोटराक्षाय दुर्निरीक्ष्याय वै नमः।नमो घोराय
रौद्राय भीषणाय करालिने ॥ ३५ ॥ नमो वराह-
नेत्राय दंष्ट्रोद्धृतधराय ते।नमस्ते सर्वभक्ष्याय वलीमुख
नमोऽस्तु ते॥ ३६॥ सूर्यपुत्र नमस्तेऽस्तु भास्कराभयदा-

थिने। अधोदृष्टे नमस्तेऽस्तु श्यामवर्ण नमोऽस्तु ते ॥ ३७॥ नमो मन्दगते तुभ्यं निस्त्रिंशाय नमो नमः । तपसा दग्धदेहाय नित्यं योगरताय च ॥३८॥ नमस्ते ज्ञाननेत्राय कश्यपात्मजसूनवे । तुष्टो राज्यप्रदस्त्वं हि क्रुद्धो राज्यापहारकः ॥ ३९ ॥ देवासुरमनुष्याश्च पशुपक्षिसरीसृपाः । त्वयाऽवलोकिताः सर्वे धैर्यमासादयन्ति ते ॥४०॥ ब्रह्मा शुक्रो हरिश्चैव मुनयः सप्ततारकाः । राज्यभ्रष्टाः पतन्त्येते त्वया च नावलोकिताः ॥४१॥ देशाः सनगरग्रामाः पर्वताश्च वनानि च ॥ रौद्रदृष्ट्या त्वया दृष्टा नाशमायान्ति तत्क्षणात् ॥४२॥ प्रसादं कुरु मे सौर वराहोऽहमवस्थितः। एवं स्तुतो यदा सौरो राज्ञा दशरथेन तु ॥ ग्रहराजः शनिर्वाक्यं हृष्टरोमाऽब्रवीत्तदा ॥४३॥ शनैश्चर उवाच॥ तुष्टोऽहं तव राजेन्द्र तपसा पौरुषेण च। दास्यामि ते वरं ब्रूहि स्वेच्छया रघुनन्दन ॥ ४४ ॥ दशरथ उवाच ॥ ॥ अद्यप्रभृति हे सौर पीडा कार्या न कस्यचित् । जगत्यस्मिंस्त्वया नाथ देवादीनां तथैव च ॥ ४५ ॥ शनैश्चर उवाच ॥ ग्रहाणां तु ग्रहो ज्ञेयो ग्रहपीडां करोम्यहम् । अदेयं प्रार्थितं तेऽद्य किन्तु युक्त्या वदाम्यहम् ॥ ४६ ॥ त्वया प्रोक्तमिदं स्तोत्रं ये पठिष्यन्ति मानवाः । पुरुषा वा स्त्रियो वापि मद्भयेनोपपीडिताः ॥ ४७ ॥ एककालं द्विकालं वा तेषां श्रेयो ददाम्यहम् । न तेषां बाधते पीडा

ये मां स्तोष्यन्ति भक्तितः ॥ ४८ ॥ पुनर्यः श्रद्धया युक्तः शुचिः शान्तः समाहितः । शमीपत्रैः समभ्यर्च्य प्रतिमां लोहजां मम ॥ ४९ ॥ कृष्णसस्यैस्तिलैः पुष्पैः फलमूलैस्तथैव च । छागमांसेन सन्तर्प्य यथाशक्त्यनुभावितः ॥ ५० ॥ मद्दिने तु विशेषेण स्तोत्रेणानेन पूजयेत् । पूजयित्वा पठेत्स्तोत्रं भूयाच्चैव कृताञ्जलिः ॥ ५१ ॥ तस्य पीडां न चैवाहं करिष्यामि कदाचन । गोचरे चाष्टवर्गे च विषमर्क्षेऽपि संस्थितः ॥५२॥ जन्मर्क्षे वाथ रन्ध्रे च दशास्वन्तर्दशासु च । रक्षामि सततं तस्य पीडामन्यग्रहैः कृताम् ॥ ५३ ॥ माषोदनं तिलैर्मिश्रं लोहं दद्याच्च दक्षिणाम् । कृष्णां गां वृषभं वापि यो दद्याच्च द्विजन्मने ॥ ५४ ॥ अनेन मद्विधानेन पीडामुक्तं जगद्भवेत् । एवमुक्त्वा वरो दत्तो मया चेक्ष्वाकुनन्दन ॥ ५५ ॥ वसिष्ठ उवाच ॥ वरमेव तु सम्प्राप्य राजा दशरथस्तदा । मेने कृतार्थमात्मानं नमस्कृत्वा शनैश्चरम् ॥ ५६ ॥ शनैश्चराभ्यनुज्ञातो रथमारुह्य वेगवान् । स्वस्थानं गतवान्राजा पूज्यमानो दिवालयैः ॥ ५७ ॥ य इदं प्रातरुत्थाय सौरवारे सदा पठेत् । तस्याभीष्टप्रदो नित्यं भविष्यति शनैश्चरः ॥ ५८ ॥ कृष्णवर्णः कृशाङ्गश्च कृष्णजीमूतसन्निभः । शनैश्चरः सूर्यपुत्रः स सौरः प्रीयतां मम ॥ ५९ ॥

इति स्कन्दपुराणे शनिस्तोत्रम् ॥

# अथ राहुस्तोत्रम् ।



ॐ नमो राहवे। नमस्ते दैत्यरूपाय देवारिं प्रणमाम्यहम् । नमस्ते सर्वभक्ष्याय घोररूपाय वै नमः ॥ १ ॥ त्वं ब्रह्मा वरुणो देवस्त्वं विष्णुस्त्वं हरिः शिवः । मर्त्यलोके भवान्प्रीतः संसारजनतारकः ॥ २ ॥ कूटपर्वतदुर्गाणि नगराणि पुराणि च। यस्य क्रोधवशाद्भस्मीभवन्ति क्षणमात्रकम् ॥ ३ ॥ धूम्रवर्णो भवान्राहू रक्ताक्षः पिङ्गलोपनः । क्रूरग्रहस्तथा भीमो यमरूपो महाबलः ॥ ४ ॥ यस्य स्थाने पञ्चमेऽपि षष्ठे चैव तृतीयके । दशमैकादशे चैव तस्य श्रेयः करोत्यलम् ॥ ५ ॥ अन्नं खड्गं च यद्दत्तं राहवे सुफलप्रदम् । पृथिव्यां ब्रह्मपीडां च गोपीडां तन्निवारयेत् ॥ ६ ॥ कृमिकीटपतङ्गेषु चरन्तं सचराचरम् । गोदानं भूमिदानं च ह्यन्नं वस्त्रं च दापयेत् ॥ ७ ॥ सौवर्णं रौप्यदानं च कन्यादानं च तत्क्षणात् । एतद्दानं च सम्पूर्णं राहुमोक्षकरं नृणाम् । अस्य स्तोत्रस्य माहात्म्याद्राहुपीडा विनश्यति॥८॥रक्ताक्षो धूम्रवर्णाभो विजितारिर्महाबलः । अबाहुश्चान्तरिक्षस्थः स राहुः प्रीयतां मम ॥ ९ ॥

इति राहुस्तोत्रम् ॥



# अथ केतुस्तोत्रम् ।



ॐ धूम्रा द्विबाहवः सर्वे गोदानो विकृताननाः । गृध्रायानासनस्थाश्च पांतु नः शिखिनन्दनाः ॥ १ ॥ श्रीभैरव्युवाच ॥ धन्या चानुगृहीतास्मि कृतार्थास्मि जगत्प्रभो। यच्छ्रुतं त्वन्मुखाद्देव केतुस्तोत्रमिदं शुभम्॥२॥ श्रीपरमेश्वर उवाच॥शृणु देवि प्रवक्ष्यामि केतुस्तवमिमं परम्। सर्वपापविशुद्धात्मा स रोगैर्मुच्यते ध्रुवम् ॥ ३॥ श्वेतपीतारुणः कृष्णः क्वचिच्चामीकरप्रभः। शिवार्चनरतः केतुर्ग्रहपीडां व्यपोहतु ॥४॥ नमो घोरायाघोराय महाघोरस्वरूपिणे। आनन्देशाय देवाय जगदानन्ददायिने॥५॥ नमो भक्तजनानन्ददायिने विश्वभाविने । विश्वेशाय महेशाय केतुरूपाय वै नमः ॥ ६ ॥ नमो रुद्राय सर्वाय वरदाय चिदात्मने। त्र्यक्षाय त्रिनिवासाय नमः सङ्कटनाशिने॥७॥ त्रिपुरेशाय देवाय भैरवाय महात्मने। अचिन्त्याय चितिज्ञाय नमश्चैतन्यरूपिणे ॥ ८ ॥ नमः शर्वाय चर्च्याय दर्शनीयाय ते नमः । आपदुद्धरणायापि भैरवाय नमोनमः ॥ ९ ॥ नमो नमो महादेव व्यापिने परमात्मने। नमो लघुमते तुभ्यं ग्राहिणे सूर्यसोमयोः ॥१०॥ नमश्चापद्विनाशाय भूयो भूयो नमो नमः। नमस्ते रुद्ररूपाय चोग्ररूपाय केतवे ॥ ११॥ नमस्ते सौररूपाय शत्रुक्षयकराय च। महातेजाय वै तुभ्यं पूजा-

फलविवर्धिने॥ १२॥ वह्निपुत्राय ते दिव्यरूपिणे प्रियकारिणे। सर्वभक्ष्याय सर्वाय सर्वग्रहान्तकाय ते ॥ १३॥ नमः पुच्छस्वरूपाय महामृत्युकराय च । नमस्ते सर्वदा क्षोभकारिणे व्योमचारिणे ॥ १४॥ नमस्ते चित्ररूपाय मीनदानप्रियाय च । दैत्यदानवगन्धर्ववन्द्याय महते नमः ॥ १५॥ य इदं पठते नित्यं प्रातरुत्थाय मानवः। ग्रहशान्तिर्भवेत्तस्य केतुराजस्य कीर्तनात्॥ १६ ॥ यः पठेदर्धरात्रे तु वशं तस्य जगत्त्रयम् । इदं रहस्यमखिलं केतुस्तोत्रं तु कीर्तितम् ॥ १७॥ सर्वसिद्धिप्रदं गुह्यमायुरारोग्यवर्धनम् । गुह्यं मंत्रं रहस्यं तु तव भक्त्या प्रकाशितम् ॥ १८ ॥ अभक्ताय न दातव्यमित्याज्ञा पारमेश्वरी ॥ १९ ॥ श्रीदेवी उ० ॥ भगवन्भवतानेन केतुस्तोत्रस्य मे प्रभो । कथनेन महेशान सत्यं क्रीतास्म्यहं त्वया ॥ २० ॥ श्रीईश्वर उ० ॥ इदं रहस्यं परमं न देयं यस्य कस्य चित् । गुह्यं गोप्यतमं देयं गोपनीयं स्वयोनिवत् ॥ २१ ॥ अग्निपुत्रो महातेजाः केतुः सर्वग्रहान्तकः ॥ क्षोभयन्यः प्रजाः सर्वाः स केतुः प्रीयतां मम ॥ २२ ॥

इति केतुस्तोत्रम् ॥



# अथ पराप्रवेशिका ।

ॐ नमः पराशक्त्यै ॥

विश्वात्मिकां तदुत्तीर्णां हृदयं परमेशितुः ।
परादिशक्तिभेदेन स्फुरन्तीं संविदं नुमः ॥

इह खलु परमेश्वरः प्रकाशात्मा । प्रकाशश्च विमर्शस्वभावः ॥ विमर्शो हि नाम, विश्वाकारेण विश्वप्रकाशेन विश्वसंहारेण वा अकृत्रिमाहमिति स्फुरणम् ॥ यदि निर्विमर्शः स्यादनीश्वरो जडश्च प्रसज्येत ॥ एक एव विमर्शः । चिच्चैतन्यं स्वरसोदिता परा वाक् स्वातंत्र्यं परमात्मनो मुख्यमैश्वर्यं कर्तृत्वं स्फुरता सारः हृदयं स्पन्द इत्यादिशब्दैरागमेषूद्घोष्यते।अत एवाऽकृत्रिमाहमिति सत्तत्त्वम् ॥ स्वयंप्रकाशस्वरूपः परमेश्वरः पारमैश्वर्यात् शिवादिधरण्यन्तं जगदात्मना स्फुरति प्रकाशते । एतदेवाऽस्य जगत्कर्तृत्वमजडत्वं च । जगतश्च कार्यत्वमप्येतदधीनप्रकाशत्वमेव।एवंभूतं जगत्प्रकाशरूपात्कर्तुर्महेश्वराद्भिन्नमेव । भिन्नत्वे हि अप्रकाशमानत्वेन प्रकाशनायोगान्न किंचित्स्यात् । अनेन च जगताऽस्य भगवतः प्रकाशात्मकं रूपं न कदाचित्तिरोधीयते । एतत्प्रकाशनेन प्रतिष्ठां लब्ध्वा प्रकाशमानमिदं जगत् आत्मनः प्राणभूतं कथं निरोद्धुं शक्नुयात् । कथं च रूपं तन्नि-

रुद्ध्य स्वयमवतिष्ठते ॥ अतश्चाऽस्य वस्तुनः साधकमिदं बाधकमिदं प्रमाणमित्यनुसन्धानात्मकसाधकबाधकप्रमातृरूपतया चाऽस्य सद्भावः। तत्सद्भावे किं प्रमाणमिति वस्तुसद्भावमनुमन्ये। तादृक्स्वभाववत्वे किं प्रमाणमिति प्रष्टृरूपतया पूर्वसिद्धस्य परमेश्वरस्य स्वयंप्रकाशत्वं सर्वस्य स्वसंवेदनसिद्धम् । किंच प्रमाणमपि यमाश्रित्य प्रमाणं भवति।प्रमाणं तदधीनशरीरप्राणनीलसुखादिवेद्यं चातिशय्य सदा भासमानस्य वेदकैकरूपस्य सर्वप्रमितिभाजः सिद्धौ अभिनवार्थप्रकाशस्य प्रमाणवराकस्य कश्चोपयोगः॥ एवं च शब्दराशिपरिपूर्णानन्ताहंतापरामर्शसारत्वात्परमशिव एव षट्त्रिंशत्तत्वानि । कानि इत्याह॥शिवशक्तिसदाशिवेश्वरशुद्धविद्यामायाकलाविद्याकालनियतिपुरुषप्रकृतिमनोबुद्ध्यहंकारश्रोत्रत्वक्चक्षुर्जिह्वाघ्राणवाक्पाणिपादपायूपस्थशब्दस्पर्शरूपरसगन्धाकाशवायुवह्निसलिलभूमयः ॥ एतानि षट्त्रिंशत्तत्त्वानि। तत्र शिवतत्त्वं नाम इच्छाज्ञानक्रियात्मककेवलपूर्णानन्दस्वभावरूपः परमशिव एव ॥ १ ॥ अस्य जगत्स्रष्टुरिच्छापरिगृहीतवतः परमेश्वरस्य प्रथमस्पन्द एवेच्छाशक्तितत्त्वम् ॥२॥ अप्रतिहतेच्छत्वात् सदैवांकुरायमाणमिदं जगत्स्वात्मनाहन्तयाच्छाद्यावस्थितरूपं सदाशिवतत्त्वम् ॥ ३ ॥ अङ्कुरितं जगदिदन्तया वृत्त्या स्थितम् ईश्वरतत्त्वम्॥४॥अहंत्वेदंतत्त्वयोरै-

क्यप्रतिपत्तिः शुद्धविद्या ॥५॥ स्वस्वरूपेषु भेदभावप्रथा माया ॥ ६ ॥ यदा तु परमेश्वरः पारमेश्वर्या मायाशक्त्या स्वं स्वरूपं गूहयित्वा संकुचितग्राहकतामश्नुते तदा पुरुषसंज्ञकोऽयमेव मायामोहितः कर्मबन्धनः संसारी परमेश्वरादभिन्नोऽप्यस्य मोहः परमेश्वरस्य न भवेत् । इन्द्रजालमिवैन्द्रजालिकस्य स्वेच्छया सम्पादितभ्रान्तेः भ्रान्त एव विद्याभिज्ञातेश्वरस्तु चिद्घनो मुक्तः परमशिवः । अस्यैव सर्वकर्तृत्वं सर्वज्ञत्वं पूर्णत्वं व्यापकत्वं नित्यत्वं च । शक्तयः असंकुचिता अपि संकोचग्रहणेन " कलाविद्यारागकालनियतिरूपतया भवन्ति " ॥७॥ 'तत्र कला नाम अस्य पुरुषस्य किंचित्कर्तृत्वहेतुः ॥ ८ ॥ विद्या किंचिज्ज्ञत्वकारणम् ॥ ९ ॥ रागो विषयेष्वभिषङ्गः ॥ १० ॥ कालो हि भावनाभासनाभासनात्मक्रमावच्छेदको भूतादिः । नियतिः ममेदं कर्तव्यं ममेदमकर्तव्यमिति नियमहेतुः ॥ ११ ॥ एतत्पञ्चकमस्य स्वरूपावरकत्वात् " कञ्चुक ,, इति चोच्यते ॥ अहंकारादिपृथिव्यन्तानां तत्त्वानां कारणं मूलप्रकृतिः । एषा च सत्त्वरजस्तमसां साम्यावस्था । अविभक्तरूपं मनः संकल्पसाधनम् । बुद्धिः निश्चयसाधना । अहंकारो ममेदमित्यहंकारसाधनम् । एतत्त्रितयमन्तःकरणम् । शब्दस्पर्शरूपरसगन्धात्मकानां विषयाणां क्रमेण साधनानि, श्रोत्रत्वक्चक्षुर्जिह्वाघ्राणानि " पंच ज्ञानेन्द्रि-

याणि ” वचनादानविचरणविसर्गानन्दात्मकक्रियासाधनानि परिपाट्या वाक्पाणिपादपायूपस्थानि “ पञ्च कर्मेन्द्रियाणि ॥ ”

शब्दस्पर्शरूपरसगन्धसामान्याकाराणि पंचतन्मात्राणि । ‘आकाशम्’ अवकाशप्रदम् । ‘वायुः’ संजीवनम् । ‘अग्निः’ दाहकः पाचकश्च, ‘सलिलम्’ आप्यायनं द्रवरूपं च । भूमिः धारिका कठिनरूपा च । एतत्सर्वम् । “ यथा न्यग्रोधबीजस्थः शक्तिरूपो महाद्रुमः तथा हृदयबीजस्थं जगदेतच्चराचरम् ” इत्याम्नायरीत्या पराभट्टारिकारूपे हृदयबीजेऽन्तर्भूतम् । कथमित्याह ॥ यथा घटशरावादीनां मृद्विकाराणां पारमार्थिकं रूपं मृदेव भवति । यथा जलादिद्रव्यजातीनां विचार्यमाणं व्यवस्थितं रूपं जलादिसामान्यमेव भाति । तथा पृथिव्यादिमायान्तानां तत्त्वानां सत्तत्त्वं मीमांस्यमानं सदेव भवेत्, अस्यापि पदस्य निरूप्यमाणं स्वलक्षणं धात्वर्थव्यञ्जकप्रत्ययांशं विसृज्य प्रकृतिमात्ररूपं साकारमात्रमेवावशिष्यते । तदन्तरा चैकत्रिंशत्तत्त्वी । अतः परं शुद्धविद्येश्वरसदाशिवतत्त्वानि ज्ञानक्रियासाराणि । शक्तिविशेषत्वात् ओंकारेऽभ्युपगमरूपे अनुत्तरशक्तिमये परमरहस्येऽन्तर्भूतानि । अतः परमूर्ध्वाधःसृष्टिमयो विसर्जनीयः । एवंभूतहृदयबीजस्य महामंत्रात्मको विश्वमयो विश्वोत्तीर्णः परमशिव एवोदयविश्रान्ति-

स्थानत्वान्निजस्वभावः। ईदृशं हृदयं बीजं तत्त्वतो यो वेद स्वात्मतया समाविशति च स परमार्थतो दीक्षितः प्राणान्धारयँल्लौकिकवद्वर्तमानो जीवन्मुक्त एव भविष्यति॥

इति पराप्रवेशिकाकृतिरियं क्षेमराजस्य॥

सर्वप्रमात्रन्तःपूर्णाहन्ताचमत्कारमयं प्रकाशवपुश्चैतन्यं शिवतत्त्वम् १। सर्वभावानां बीजभूमिः किंचिदुच्छूनतारूपा तदानन्दसंवित् शक्तितत्त्वम् २। महेशस्य ज्ञानप्राधान्यात् 'अहमिदमिति' अभेदेन पूर्णाहन्ताचमत्कारबिन्दुः सदाशिवतत्त्वम् ३। क्रिया अहमिदमिति समधृततुलापुटन्यायेन यः स्वात्मचमत्कारः स नादः ईश्वरतत्त्वम् ४।

अत्रापीदन्ताप्राधान्येनाहन्तागुणीकारेण यन्ममाहमिदमित्येवं चमत्कारो बोधसारत्वात् शुद्धविद्यातत्त्वमिति ५।

कलयति कालः व्यवच्छिनत्ति जगत्॥ किंचित्कर्तृत्वं कलातत्त्वम्।

कुटजानि वर्षासु फुल्लन्ति नियतितत्त्वम्। रम्यते संविदा विषयेषु अन्तःकरणस्य प्रसक्तिः रागः। अरम्यते संविदा विषयाच्चित्तस्य निवृत्तिः द्वेषः। यथार्थतत्त्वास्फुरणम् अविद्या।

---

१ सर्वप्रमातॄणां मध्ये पूर्णाहंतायाश्चमत्कारस्वरूपम्। २ वपुश्चैतन्यं यत् तत् शिवतत्त्वम्। ३ शिवस्य। ४ ईश्वरतत्त्वम्।

